१ ॥श्रीजगदंबिकायैनमः॥धर्माधर्मौतद्विपाकास्त्रयो॥प… …नाप्यते॥यस्मिन्ने
तन्नैवराम ईशोयस्तंवंदे विष्णुमोंकारवाच्यं॥१॥याज्ञवल्क्य… …षतंमुहर्षिप्रवरस्यविक
टोक्तिविस्तृतं॥धर्मशास्त्रमृजुर्मिमिताक्षरैर्बालबोधविधयेविविच्यते॥२॥याज्ञवल्क्यशिष्यः
कश्चित्प्रश्नोत्तररूपंयाज्ञवल्क्यप्रणीतंधर्मशास्त्रंसंक्षिप्यकथयामास।यथामनुप्रोक्तंभृगुः
तस्यचाद्यमाद्यःश्लोकः॥योगीश्वरंयाज्ञवल्क्यंसंपूज्यमुनयोब्रुवन्वर्णाश्रमेतराणांनोब्रू
हिधर्मानशेषतः॥१॥योगिनांसनकादीनामीश्वरःश्रेष्ठःतंयाज्ञवल्क्यसंज्ञंसंपूज्यमनोवा
क्कायकर्मभिःपूजयित्वामुनयःसामश्रवःप्रभृतयःश्रवणधारणयोग्याअब्रुवन्नुक्तवंतः
धर्मान्नोऽस्मभ्यंब्रूहीतिकथंअशेषतःकार्त्स्न्येन।केषां:वर्णाश्रमेतराणांवर्णाब्राह्मणा रा
दयः।आश्रमाब्रह्मचारिप्रभृतयः।इतरेअनुलोमप्रतिलोमजातामूर्धावसिक्तादयः।इ
तरशब्दस्यद्वंद्वेचेतिसर्वनामसंज्ञाप्रतिषेधः॥अत्रचधर्मशब्दःषड्विधस्मार्तधर्मविषयः
॥तद्यथा।वर्णधर्मआश्रमधर्मोवर्णाश्रमधर्मोगुणधर्मोनिमित्तधर्मस्साधारणधर्मश्चे
ति॥तत्रवर्णधर्मोब्राह्मणोमद्यंवर्जयेदित्यादिः।आश्रमधर्मोअग्नींधनभैक्षचर्यादिः
वर्णाश्रमधर्मःपालाशोदंडोब्राह्मणस्येत्येवमादिःगुणधर्मःशास्त्रीयाभिषेकादिगुणयु
क्तस्यराज्ञःप्रजापरिपालनादिः।निमित्तधर्मोविहिताकरणप्रतिषिद्धसेवननिमित्तंप्रा

यश्चित्तं। साधारणधर्मश्चाहिंसादिः॥ शौचाचारांश्चशिक्षयेदित्याचार्यकरणविधिप्रयु
क्तत्वाद्धर्मशास्त्राध्ययनस्य प्रयोजनादिकथनं नातीवोपयुज्यते। तत्र चायं क्रमः प्रागुपनयना
त्कामचारः कामवादः कामभक्षः। ऊर्ध्वमुपनयनादाग्वेदाध्ययनोपक्रमाद्धर्मशास्त्राध्य
यनं· ततो धर्मशास्त्रविहितयमनियमोपेतस्य वेदाध्ययनं· ततस्तदर्थजिज्ञासा· तत
स्तदर्थानुष्ठानमिति· तत्र यद्यपि धर्मार्थकाममोक्षाः शास्त्रेणानेन प्रतिपाद्यन्ते· तथापि
धर्मप्राधान्याद्धर्मग्रहणं। प्राधान्यं च धर्ममूलत्वादितरेषां· न च वाच्यं धर्ममूलोऽर्थोऽर्थमू
लो धर्म इत्यविशेष इति· यतोऽर्थमन्तरेणापि जपतीर्थयात्रादिना धर्मो निष्पाद्यते अर्थलेशो
पि न धर्ममूलो मन्तरेणेति· एवं काममोक्षावपि इति॥ एवं पृष्टः मिथिलास्थः स योगी
न्द्रः क्षणं ध्यात्वाब्रवीन्मुनीन्॥ यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधत॥२॥ मिथिला
नाम नगरी तत्र स्थितः स याज्ञवल्क्यो योगीश्वरः क्षणं ध्यात्वा किञ्चित्कालं मनः समाधाय
एतेभ्यः वर्णाधिकारिणो विनयेन पृच्छन्तीति युक्तमेतेभ्यो वक्तुमित्युक्तवान्मुनीन्· किं यस्मि
न्देशे मृगः कृष्णः तस्मिन्धर्मान्निबोधतेति। कृष्णसारो मृगो यस्मिन्देशे स्वच्छन्दं विहरति त
स्मिन्देशे वक्ष्यमाणलक्षणा धर्मा अनुष्ठेया नान्यत्रेत्यभिप्रायः॥ शौचाचारांश्च शिक्षयेदि

२ स्याचार्यस्यधर्मशास्त्राध्यापनविधिः।शिष्येणतदध्ययनंकर्त्तव्यमितिकुतोवगम्यत
इत्यतआह॥पुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः वेदाःस्थानानिविद्यानांध
र्मस्यचचतुर्दश॥पुराणंब्राह्मादि·न्यायस्तर्कविद्या·मीमांसावेदवाक्यविचारःधर्मशा
स्त्रंमानवादि·अंगानिव्याकरणादीनिषट्·एतैरुपेताश्चत्वारोवेदाःविद्याःपुरुषा
र्थज्ञानानि·तासांस्थानानिचतुर्दशधर्मस्यचचतुर्दशस्थानानिहेतवः।एतानित्रैव
र्णिकैरध्येतव्यानितदंतर्गतत्वात्धर्मशास्त्रमध्येतव्यं।तत्रनानिब्राह्मणेनविद्या
प्राप्त्यैधर्मानुष्ठानायचअधिगंतव्यानिःक्षत्रियवैश्याभ्यांधर्मानुष्ठानाय·तथा
चशंखेनविद्यास्थानानामनुक्रम्योक्तं।एतानिब्राह्मणोधिकुरुतेसचरतिंदर्शयती
तरेषामिति·मनुरपिद्विजातीनांधर्मशास्त्राध्ययनेधिकारोब्राह्मणस्यप्रवचनेनान्य
स्येतिदर्शयति।निषेकादिश्मशानांतोमंत्रैर्यस्योदितोविधिः।तस्यशास्त्रेधिकारो
स्मिन्ज्ञेयोनान्यस्यकस्यचित्विदुषाब्राह्मणेनेदमध्येतव्यंप्रयत्नतः।शिष्येभ्यश्च
प्रवक्तव्यंसम्यङ्नान्येनकेनचित्इति॥अस्तुधर्मशास्त्रमध्येतव्यंःयाज्ञवल्क्यप्रणीत
स्यास्यशास्त्रस्यकिंमामाणमित्यत्राह॥मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोंगिराः

यमापस्तंबसंवर्त्ताः कात्यायनबृहस्पती ॥ पराशरव्याससंखलिखिता दक्षगौतमौ ॥ शाता
तपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः । उशनः शंखपर्यंतो द्वैकेवंताव: ॥ याज्ञवल्क्यप्र-
णीतमिदं धर्मशास्त्रमध्येतव्यमित्यभिप्रायः । नैषां परिसंख्या किंतु प्रदर्शनार्थमेतत् ॥ अ
तो बोधायनादेरपि धर्मशास्त्रत्वमविरुद्धं ॥ एतेषां प्रत्येकं प्रामाण्येपि साकांक्षत्वमाकां
क्षापूरणमन्यतः क्रियते विरोधे विकल्पः । इदानीं धर्मस्य कारकहेतूनाह ॥ देशे काल उपा
येन द्रव्यं श्रद्धासमन्वितं । पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणं ॥ यस्मिन्देशे मृगः कृष्णस्तु
क्तलक्षणो देशः । कालः संक्रांत्यादिः । उपायः शास्त्रोक्तेतिकर्त्तव्यताकलापः ॥ द्रव्यप्र-
तिग्रहादिलब्धं गवादि · श्रद्धा आस्तिक्यबुद्धिः । तदन्वितं यथा भवति तथा पात्रं तु विप
येसादि वक्ष्यमाणलक्षणं । प्रदीयते यथा न प्रत्यावर्त्तते परस्वत्वापत्त्यवसानसमर्पणेन · एत
द्धर्मस्योत्पादकं । किमेतावदेव नेत्याह सकलमिति · अन्यदपि शास्त्रोक्तं जातिगुणहोमया
गादि तत्सकलं धर्मस्य कारकं · जातिगुणद्रव्यभावार्थात्मकं चतुर्विधमपि धर्मस्य कारकमि
त्युक्तं भवति ॥ तच्च समस्तमस्तं वा यथाशास्त्रं द्रष्टव्यं · श्रद्धा सर्वत्रानुवर्त्तनीया ॥ इदानीं
धर्मस्य ज्ञापकहेतूनाह ॥ श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । सम्यक्संकल्प

२ जः कामो धर्ममूलमिदं स्मृतं॥ श्रुतिर्वेदः स्मृतिर्धर्मशास्त्रं। तथा च मनुः। श्रुतिस्तु वेदो विज्ञे
यो धर्मशास्त्रं तु वै स्मृतिरिति· सदाचारः सतां। शिष्टानामाचारोनुष्ठानं। स्वस्य च आत्म
नः। प्रियं वैकल्पिके विषये॥ यथा गर्भाष्टमेष्टमे वाब्दे इत्यादावात्मेष्टेव नियामिका। सम्य
क्संकल्पाज्जातः कामः शास्त्राविरुद्धो यथा मया भोजनव्यतिरेकेण जलं न पातव्यमि
ति· एते धर्मस्य मूलं प्रमाणं। एतेषां विरोधे पूर्वं पूर्वं बलीयस्त्वं॥ देशादिकारकहेतूनाम
पवादमाह॥ इज्याचारदमाहिंसादानस्वाध्यायकर्मणां॥ अयं तु परमो धर्मो यद्योगेनात्मद
र्शनं॥ इज्यादीनां कर्मणामयमेव परमो धर्मः यद्योगेन बाह्यचित्तवृत्तिनिरोधेनात्मनो दर्श राम
नं यथार्थ्यज्ञानं· योगेनात्मज्ञाने देशादिनियमो नास्तीत्यर्थः॥ तदुक्तं यत्रैकाग्रता तत्रा
विशेषादिति॥ कारकहेतुषु ज्ञापकहेतुषु वा संदेहे निर्णयहेतुमाह॥ चत्वारो वेदधर्मज्ञाः
पर्षत्त्रैविद्यमेव वा। सा ब्रूते यं स धर्मः स्यादेको वाध्यात्मवित्तमः॥ चत्वारो ब्राह्मणाः वेद
धर्मशास्त्रज्ञाः पर्षत्· तिस्रो विद्या अधीयत इति त्रैविद्याः तेषां समूहः त्रैविद्यं· धर्मशा
स्त्रज्ञत्वमत्राप्यनुवर्तते· तद्वा पर्षत्· सा पूर्वोक्ता पर्षत् यं ब्रूते स धर्मः॥ अध्यात्मज्ञानेषु नि
पुणतमो धर्मशास्त्रज्ञश्च स एको वा यं ब्रूते स धर्म एव॥ इत्युपोद्घातप्रकरणं॥ ॥ ॥ ॥ ३

एतैर्नवभिः श्लोकैः सकलशास्त्रोपोद्घातमुक्त्वा इदानीं ब्राह्मणादीनां धर्मान्वक्तुं प्रथमं
तावत्तु वर्णानाह ॥ ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः । निषेकाद्याः श्मशा
नांतास्तेषां वै मंत्रतः क्रियाः ॥ ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा वक्ष्यमाणलक्ष-
णास्तेषामाद्यास्त्रयो ब्राह्मणक्षत्रियवैश्या द्विजाः द्विर्जायंत इति द्विजाः तेषां द्विजानामे
व न शूद्रस्य निषेकाद्याः निषेको गर्भाधानं माद्यो यासां तास्तथोक्ताः श्मशानेपितृवनं त
त्संबंधिकर्मांतो यासां ताः क्रिया मंत्रैर्भवंति ॥ इदानीं ताः क्रियाः अनुक्रामति ॥ गर्भाधानमृ
तौ पुंसः सवनं स्पंदनात्पुरा । षष्ठेऽष्टमे वा सीमंतो मास्येते जातकर्म च ॥ अहन्येकादशे ना
म चतुर्थे मासि निष्क्रमः ॥ षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलं ॥ गर्भाधानमित्यनु
गतार्थकर्मनामधेयं · एवं वक्ष्यमाणान्यपि · तद्गर्भाधानमृतौ चर्तुकाले वक्ष्यमाण
लक्षणे · पुंसवनाख्यं कर्म गर्भचलनात्पूर्वं · षष्ठेऽष्टमे वा मासि सीमंतोन्नयनं · एतच्च
द्वे पुंसवनसीमंतोन्नयने क्षेत्रसंस्कारकर्मत्वात्सकृदेव कार्ये न प्रतिगर्भं । यथाह देव
लः । सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृतेति । प्राइते आगते गर्भकोशात्कुमारे-
जाते जातकर्म · एकादशेऽहनि नामकरणं तच्च पितामहमातामहादिसंबद्धं कुलदेव

४ तासंबद्धं वा॰ यथाह शंखः। कुलदेवतासंबद्धं पिता नाम कुर्यादिति॰ चतुर्थे मासि निष्क्र
मणं कर्म सूर्यावेक्षणं॰ षष्ठे मास्यन्नप्राशनं कर्म॰ चूडालक्षणं तु यथाकुलं॰ का
र्यमिति प्रत्येकं संबध्यते॰ एतेषां नित्यत्वेप्यानुषंगिकं फलमाह॥ एवमेनः शमं याति
बीजगर्भसमुद्भवं॰ एवमुक्तेन प्रकारेण गर्भाधानादिभिः संस्कारकर्मभिः कृतैः एनः
पापं शमं याति॰ किंभूतं बीजगर्भसमुद्भवं शुक्रशोणितसंबद्धं॰ गोत्रमाधिसंक्रांतिनि
मित्तं॰ न तु पतितोत्पन्नत्वादि॥ स्त्रीणां विशेषमाह॥ तूष्णीमेताः क्रियाः स्त्रीणां विवा
हस्तु समंत्रकः। एता जातकर्मादिक्रियाः स्त्रीणां तूष्णीं विनैव मंत्रैर्यथाकालं कार्याः। राम
विवाहः पुनः समंत्रकः॥ गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनं। राज्ञामेकादशे से
के विशामेके यथाकुलं॥ गर्भाधानमादिं कृत्वा जन्म वा अष्टमे वर्षे ब्राह्मणस्योप
नायनं॰ उपनयनमेवोपनायनं स्वार्थेऽण् वृत्तानुसारात्॥ आर्षं दीर्घत्वम्॥ ग
र्भादेकादशे राज्ञो गर्भाद्द्वादशे विश इति स्मृत्यंतरनिदर्शनात्॥ समासे गु
णीभूतस्यापि गर्भशब्दस्य बुद्ध्या विभज्योभयत्राप्यनुवर्तनं कार्यं॥ यथा शब्दा

श्रय

५ शौचं कुर्यादतंद्रितः॥१७॥ अनंतरं शिश्नं गृहीत्वोत्थायोद्धृताभिरद्भिर्वक्ष्यमाणलक्षणाभिर्मृद्भिश्च गंधलेप
योः क्षयकरं शौचं कुर्यादनलसः॥ उद्धृताभिरद्भिरिति जलांतः शौचनिषेधात्॥ अत्र गंधलेपयोः क्षयक
रमिति सर्वाश्रमिणां साधारणमिदं शौचं न तत्संख्यानियमः स्वदृष्टार्थः॥ अंतर्जानुः शुचौ देशे उपविष्ट उ
दङ्मुखः। प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्॥ अशुचौ अशुचिद्रव्यासंस्पृष्टे देशे॥ उपानच्छ
त्रासनादि निषेधः॥ उपविष्टो न स्थितः शयानः प्रह्वो गच्छन्वा॥ उदङ्मुखः प्राङ्मुखो वा तदिगंतरनिवृ
त्तिः। शुचौ देशे इत्येतस्मात्पादप्रक्षालनप्राप्तिः। ब्राह्मेण तीर्थेन वक्ष्यमाणेन द्विजो न शूद्रादिः। नित्यं
सर्वकालं॥ आश्रमांतरगतोपि उपस्पृशेदाचामेत्॥ कथं अंतर्जानुर्जान्वोर्मध्ये हस्तौ कृत्वा दक्षिणेन हस्ते
नेति॥ कनिष्ठादेशिन्यंगुष्ठमूलान्यग्रं करस्य च प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्॥ कनिष्ठायाः राम
तर्जन्या अंगुष्ठस्य च मूलानि करस्याग्रं च प्रजापतिपितृब्रह्मदेवतीर्थानि यथाक्रममेवं वेदितव्यानि॥ त्रिः
प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत्॥ अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः॥ बार
त्रयमपः पीत्वा मुखमंगुष्ठमूलेन द्विरुन्मृज्य खानि छिद्राणि ऊर्ध्वकायगतानि घ्राणादीनि अद्भिरु
पस्पृशेत्॥ अद्भिर्द्रव्यांतरासंसृष्टाभिः। पुनरपि ग्रहणं प्रतिच्छिद्रमुदकस्पर्शार्थं। पुनस्ता एव विशिन
ष्टि॥ प्रकृतिस्थाभिः गंधरूपरसस्पर्शैः॥ आतारकोदयात्तारकोदयावधि॥ प्राक्संध्या प्रातःसं
ये एवं पूर्वोक्तं विधिमाचरन् प्राङ्मुखः सूर्योदयावधि तिष्ठेत्॥ अहोरात्रयोः संधौ या क्रिया विधीयते
सा संध्या॥ तत्राहः संपूर्णादित्यमंडलदर्शनयोग्यः कालः॥ तद्विपरीतो रात्रिः॥ यस्मिन्काले खंडमं ५

लक्ष्योपलब्धिः संधिः॥ अग्निकार्यं ततः कुर्यात्संध्ययोरुभयोरपि॥ ततोभिवादयेद्वृद्धान्
असावहमिति ब्रुवन्॥ ततः संध्योपासनानंतरं द्वयोः संध्ययोरग्निकार्यमग्नौकार्यं समित्प्रक्षे
पादि यत्तत्कुर्यात् स्वगृह्योक्तेन विधिना। तदनंतरं वृद्धान् गुरून् भर्तृन् अभिवादयेत्। कथमसौ
देवदत्तशर्माहमिति स्वनाम कीर्तयन्। गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः। आहूतश्चा
प्यधीयीत लब्धं चास्मै निवेदयेत्॥ हितं तस्याचरेन्नित्यं मनोवाक्कायकर्मभिः। तथा गुरुं व
क्ष्यमाणलक्षणं उपासीत। तस्य परिचर्यापरस्तदधीनस्तिष्ठेत्॥ स्वाध्यायार्थमध्ययनसिद्ध
ये समाहितोऽविक्षिप्तचित्तो भवेत्। आहूतश्चाप्यधीयीत। गुर्वाहूत एवाधीयीत। न स्वयं प्रेर
येत्॥ यल्लब्धं तत्सर्वं गुरवे निवेदयेत्॥ तथा। तस्य गुरोर्हितमाचरेन्नित्यं सर्वदा मनोवाक्कायक
र्मभिः। न प्रतिकूलं कुर्यात्॥ अपिशब्दात् गुरुदर्शने गौतमोक्तं कंठप्रावृतादि वर्जयेत्। कृत
ज्ञोऽद्रोही मेधावी शुचिः कल्योऽनसूयकः। अध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदाः। कृतमुपका
रं न विस्मरतीति कृतज्ञः। अद्रोही दयावान्। मेधावी ग्रंथग्रहणधारणशक्तः। शुचिर्बाह्याभ्यंतर
शौचवान्। कल्यः आधिव्याधिरहितः। अनसूयको दोषानाविष्कारेण गुणाविष्करणशीलः। सा
धुर्वृत्तवान्। शक्तः शुश्रूषायां। आप्तो बंधुः। ज्ञानदो विद्याप्रदः। वित्तदः अपणपूर्वं वित्तप्रदाता।
एते गुणाः समस्ता व्यस्ताश्च यथासंभवं द्रष्टव्याः। एते धर्मशास्त्रानुसारेण अध्याप्याः। दंडाजिनोप
वीतानि मेखलां चैव धारयेत्। ब्राह्मणेषु चरेद्भैक्ष्यमनिंद्येष्वात्मवृत्तये॥ सत्स्वन्येष्वप्रसिद्धपा

६ लाशादिदंडं॥ अजिनंकाष्ण्यादि· उपवीतंकार्पासादिनिर्मितं· मेखलांमुंजादिनिर्मितां ब्रह्मचारी
धारयेत्॥ पूर्वोक्तदंडादियुक्तो ब्रह्मचारी ब्राह्मणेषु अनिंद्येषु अनभिशस्तेषु स्वकर्मनिरतेषु भै-
क्ष्यंचरेत्· आत्मवृत्तये· आत्मनोजीवनार्थंनपरार्थं· आचार्येणतद्भार्यापुत्रर्वानिर्देशेन॥ निवे
द्यगुरवे· गुरुणानुज्ञातोभुंजीत। तदभावेतद्भार्यापुत्रादौ इतिनियमात्॥ अत्रचब्राह्मणग्र
हणंसंभवेसतिनियमार्थं· यत्तुसार्ववर्णिकंभैक्ष्यचरणमितित्रैवर्णिकप्राप्त्यर्थं· यच्चचातु
र्वर्ण्यंचरेद्भैक्ष्यमितितदापद्विषयं· कथंभैक्ष्यचर्या॥ ~~अपोशनक्रियापूर्वंसत्कृत्यान्नमकु~~
आदिमध्यावसानेषुभवच्छब्दोपलक्षिता॥ ब्राह्मणक्षत्रियविशांभैक्ष्यचर्यायथाक्रमं॥ ॐभ
वतिभिक्षांदेहि· भिक्षांभवतिदेहि भिक्षांदेहिभवति। एवंवर्णक्रमेणभैक्ष्यचर्याकार्या॥ कृता राम
ग्निकार्योभुंजीतवाग्यतोगुर्वनुज्ञया॥ अपोशनक्रियापूर्वंसत्कृत्यान्नमकुत्सयन्॥२२॥ पू
र्वोक्तविधिनाभिक्षामाहृत्यगुरवेनिवेद्यतदनुज्ञयाकृताग्निकार्योवाग्यतोमौनी अन्नंस
त्कृत्यसंपूज्य अकुत्सयन् अनिंदन्· अपोशनाक्रियापूर्वं· अमृतोपस्तरणमसीत्यादिकांपू
र्वंकृत्वाभुंजीत। अत्रपुनरग्निकार्यग्रहणंसंध्याकालेकथंचिदकृताग्निकार्यस्यकालांतर-
विध्यर्थंनपुनर्द्वितीयप्राप्त्यर्थं॥ ब्रह्मचर्येस्थितोनैकमन्नमद्यादनापदि॥ ब्राह्मणःकाममश्नी
याच्छ्राद्धेव्रतमपीडयन्॥२३॥ ब्रह्मचर्येस्थितः एकान्ननाद्यात्। अनापदि आपदभावेब्राह्म
णःपुनःश्राद्धेअभ्यर्थितःसन्काममश्नीयात्। व्रतमपीडयन्मधुमांसपरिहारेण· अत्रब्रा

१ कालस्य परमावधिमाह ॥ आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात् ॥ ब्रह्मक्षत्रविशां का
ल औपनायनिकः ॥२८॥ अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः । सावित्रीपतिता व्रात्या व्रा
त्यस्तोमादृते क्रतोः ॥२९॥ आषोडशाद्वर्षात् षोडशवर्षपर्यन्तं आद्वाविंशात् आचतुर्विंशाद्ब्रह्म
क्षत्रविशां औपनायनिक उपनयनसंबंधी परः कालः अतः परमुपनयनकालोऽस्ति किं तु पतन्त्ये
ते सर्वधर्मबहिष्कृताः सर्वधर्मेष्वनधिकारिणो भवंति । सावित्रीपतिता सावित्रीका भवंति । सा
वित्रीदानयोग्या न भवंति व्रात्यस्तोमादृते क्रतोः । व्रात्यस्तोमाख्यक्रतोर्विना कृतेन तस्मिन्
उपनयनाधिकारिणो भवंति ॥ आद्यास्त्रयो द्विजा इत्युक्तं तत्र हेतुमाह ॥ मातुर्यदग्रे जायंते द्वि
तीयं मौञ्जिबंधनात् ॥ ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥३०॥ मातुः सकाशात्प्रथ राम
मं जन्म जायते द्वितीयं तु मौञ्जिबंधनात् जायते यस्मात्तस्मादेते ब्राह्मणक्षत्रियवैश्या द्विजा उच्यं
ते ॥ ग्रहणाध्ययनफलमाह ॥ यज्ञानां तपसां चैव शुभानां चैव कर्मणां ॥ वेद एव द्विजातीनां निः
श्रेयसकरः परः ॥३१॥ यज्ञानां श्रौतस्मार्तादीनां तपसां कायसंतापरूपाणां कृच्छ्रचांद्रायणा
दीनां शुभानां च कर्मणां उपनयनादिसंस्काराणां अवबोधकत्वेन वेद एव द्विजातीनां परो निःश्रे
यसकरः । नान्यः । वेदस्य वृत्तित्वमूलत्वात्स्मृतेरुपलक्षणार्थं ॥ ग्रहणाध्ययनफलमुक्त्वेदानी
कांप्यब्रह्मयज्ञाध्ययनफलमाह ॥ मधुना पयसा चैव स देवांस्तर्पयेद्द्विजः ॥ पितॄन्मधुघृताभ्यां च
ऋचोऽधीते च योन्वहं ॥ यजूंषि शक्तितोऽधीते योन्वहं स घृतामृतैः प्रीणाति देवानाज्येन मधुना च १

पितॄंश्च तथा ॥ स तु सोमघृतैर्देवांस्तर्पयेद्योऽन्वहं पठेत् ॥ सामानि तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा
॥ ४३ ॥ योऽन्वहं ऋचोऽधीते स मधुना पयसा च देवान् प्रीणाति ॥ पितॄंश्च मधुघृताभ्यां प्रीणाति ।
यस्तु शक्तितोऽन्वहं यजूंष्यधीते स घृतामृतैर्देवान् पितॄंश्च मधुघृताभ्यां प्रीणाति । यस्तु सा
मान्यन्वहमधीते स सोमघृतैर्देवान् पितॄंश्च मधुसर्पिर्भ्यां प्रीणाति ॥ ऋगादिग्रहणं सामान्ये
न ऋगादिमात्रप्रा[redacted]र्थं ॥ मेदसा तर्पयेद्देवानथर्वाङ्गिरसः पठन् । पितॄंश्च मधुसर्पिर्भ्यामन्वहं श
क्तितो द्विजः ॥ ४४ ॥ वाकोवाक्यं पुराणं च नाराशंसीश्च गाथिकाः ॥ इतिहासांस्तथा विद्यां यो
ऽधीते शक्तितोऽन्वहं ॥ मांसक्षीरौदनमधुतर्पणं च दिवौकसां । करोति तृप्तिं कुर्याच्च पितॄणां म
धुसर्पिषा ॥ ४६ ॥ ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः ॥ ॥ यः पुनः शक्तितोऽन्वहं अथर्वा
ङ्गिरसोऽधीते स देवान् मेदसा पितॄंश्च मधुसर्पिर्भ्यां च तर्पयति ॥ यस्तु वाकोवाक्यं प्रश्नोत्तर
रूपं वेदवाक्यं · पुराणं ब्राह्मादि · चकारान्मानवादिधर्मशास्त्रं · नाराशंसीश्च रुद्रदैवत्यान् मन्त्रा
न् गाथाश्च यज्ञगाथेन्द्रगाथाद्याः · इतिहासादीन् महाभारतादीन् · विद्याश्च वारुण्याद्याः शक्ति
तोऽन्वहमधीते स मांसक्षीरौदनमधुभिर्देवान् पितॄंश्च मधुसर्पिर्भ्यां प्रीणाति ॥ ते पुनस्तृप्ताः सु
ताः देवताः पितरश्च · एनं स्वाध्यायकारिणं सर्वकामफलैः शुभैरनन्योपघातलक्षणैस्तर्पयन्ति
॥ ॥ प्रशंसार्थमाह ॥ ॥ यं यं क्रतुमधीयीत तस्य तस्याप्नुयात्फलं त्रिर्वित्तपूर्णपृथिवीदानस्य

मिता०आ०

८ फलमश्नुते॥ तपसश्च परस्येह नित्यं स्वाध्यायवान्द्विजः॥४७॥ यस्य यस्य क्रतोः प्रतिपादकं वेदैकदेशमन्व
हंयोधीते तस्य तस्य क्रतोः फलमवाप्नोति तथा वित्तपूर्णायाः पृथिव्याः त्रिर्दानस्य यत्फलं परस्य च तप
सः चांद्रायणादेर्यत्फलं तदपि नित्यं स्वाध्यायवानवाप्नोति॥ नित्यग्रहणं काम्यस्यापि सतो नित्यत्वज्ञाप
नार्थं॥ ॥एवं सामान्येन ब्रह्मचारिधर्मानभिधाय नैष्ठिकस्य विशेषमाह॥ नैष्ठिको ब्रह्मचारी तु वसेदाचा
र्यसन्निधौ॥ तदभावेस्य तनये पत्न्यां वैश्वानरेपि वा॥ अनेन विधिना देहं साधयन्विजितेंद्रियः॥ ब्रह्मलोक
मवाप्नोति न चेह जायते पुनः॥४९॥ अनेन प्रकारेण आ प्रायणात् निष्ठा उत्क्रांतिकालं नयतीति नैष्ठिकः॥
स यावज्जीवमाचार्यसमीपे वसेत्। न वेदग्रहणानंतरकाले स्वतंत्रो भवेत्॥ तदभावे तत्पुत्रसमीपे तदभावे
तत्पत्नीतन्मायाः समीपे वसेत् तदभावे वैश्वानरेपि॥ अनेनोक्तविधिना देहं साधयन्नुपशोषयन् विजितेंद्रियः
इंद्रियजये विशेषप्रयत्नवान् ब्रह्मचारी ब्रह्मलोकमनंतत्वमवाप्नोति॥ न कदाचिदिह जायते॥ इति ब्रह्मचारि राम
प्रकरणं॥ ॥यः पुनर्वैवाहिकस्तस्य विवाहार्थं स्नानमाह॥ ॥ ॥ गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया॥
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा॥५१॥ पूर्वेण न्यायेन वेदं मंत्रब्राह्मणात्मकं व्रतानि ब्रह्मचारिधर्मानुक्ता
तांस्तान्वा॥ उभयं वा पारं नीत्वा समाप्य गुरवे पूर्वोक्ताय वरमभिलषितं यथाशक्ति दत्त्वा स्नायात्॥ अनु
ज्ञातो तदनुज्ञया॥ अदत्तवरोपि। एषां च पक्षाणां शक्तिकालाद्यपेक्षया व्यवस्था॥ स्नानानंतरं किं कर्तव्य
मित्यत आह॥ ॥अविप्लुतब्रह्मचर्यो लक्षण्यां बाह्याभ्यंतरलक्षणैर्युक्तां॥ बाह्यानि लक्षणानि तनुलो
मकेशदशनादीनि मनूक्तानि॥ आभ्यंतराणि अष्टौ पिंडान्कृत्वा इत्याश्वलायनोक्तेन विधिना

व्हदोषाभावे॰ असपिंडां॰ समानः एकः पिंडो देहो यस्याः सा सपिंडा न समानपिंडा न समानपिंडा
नाज्ञातव्याधि॥ स्त्रियं नपुंसकत्वनिरसये॰ स्त्री तेन परीक्षितां॰ अनन्यपूर्विकां दानेनोपभोगि
न वा पुरुषांतरापरिगृहीतां। कांतां कमनीयां॰ वोढुर्मनोनयनानंदकारिणीं॰ यस्यां मनश्चक्षुषो
र्निबंधस्तस्यामृद्धिरिति आपस्तंबस्मरणात्॥ एतेन न्यूनाधिकांगादिबी व्हदोषाभावे॰ असपिं
डां॰ समानः एकः पिंडो देहो यस्याः सा सपिंडा न समानपिंडा असमानपिंडा तां। सपिंडता च ए
कशरीरान्वयेन भवति। तथा हि पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सह॰ पितामहा
दिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात्॰ एवं मातृशरीरावयवान्वयेन मात्रा॰ मा
तामहादिभिरपि मातृद्वारेण मातृष्वस्रमातुलादिभिरपि एकशरीरावयवान्वयात् एवं
पितृव्यपितृष्वस्रादिभिरपि। तथा च सा सह पत्न्या एकशरीरारंभकत्वे तथा एवं भ्रातृभार्या
णामपि परस्परमेकशरीरारब्धैः सह एकशरीरारंभकत्वेन॰ एवं यत्र यत्र सपिंडशब्दस्त
त्र तत्र साक्षात्परंपरया वा एकशरीरावयवान्वयो वेदितव्यः। यद्येवं मातामहादीनामपि
दशावमाशौचं सपिंडेषु विधीयत इति अविशेषेण प्राप्नोति॰ स्यादेतत्॰ यदि तत्र तत्र प्रत्ताना
मितरे कुर्युरित्यादिविशेषवचनं न स्यात्॰ अतश्च सपिंडेषु यत्र विशेषवचनं नास्ति तत्र स्था
हमिसेसद्वचनमवतिष्ठते। अवयवैकशरीरावयवान्वयेन सापिंड्यं वर्णनीयं॥ आत्मा हि
जज्ञ आत्मन इति श्रुतेः॥ तथा प्रजामनु प्रजायसे इति च। अथ यापि सएवायं विरुद्धः असक्षेणा

१ पलभ्यतइत्यपस्तंबवचनाच्च॥ तथागर्भोपनिषदि तस्मात्षाट्कौशिकं शरीरं त्रीणिपितृतः त्री
णिमातृतः। अस्थिस्नायुमज्जानः पितृतः। त्वङ्मांसशोणितानिमातृतः। तत्र तत्रावयवान्वय
प्रतिपादनात्। निर्वाप्यपिंडान्वयेनतुमातृसंतानेभ्रातृपितृव्यादिषुचसापिंडनस्यात्। समु
दायशक्त्यंगीकरणेनरूढिपरिग्रहेऽवयवशक्तिस्तत्रतत्रावगम्यमानापरित्यक्तास्यात्
परंपरयैकशरीरावयवान्वयेनसापिंड्येयथानातिप्रसंगस्तथावक्ष्यामः॥ यवीयसी॰ व
यसाप्रमाणतश्चन्यूनामुद्वहेत्। परिणयेत॰ स्वगृह्योक्तविधिना॥ ॥विशेषांतरमाह॥
अरोगिणींभ्रातृमतीमसमानार्षगोत्रजां॥ अरोगिणी॰ अचिकित्सनीयरोगानुपसृष्टा
। भ्रातृमती॥ पुत्रिकाकरणशंकानिरासाय॥ अनेनापरिणीतापिपुत्रिकाभवतीतिग राम
म्यते। असमानार्षगोत्रजां॥ आर्षेयमिति॰ ऋषेरिदमार्षेयंनामप्रवर इत्यर्थः॥ गोत्रंवंशपरं
पराप्रसिद्धं। आर्षंचगोत्रंचआर्षगोत्रे॰ समानेआर्षगोत्रेयस्यासौसमानार्षगोत्रस्तस्मा
ज्जाता॰ नसमानार्षगोत्रजाअसमानार्षगोत्रजाता॰ गोत्रप्रवरयोश्चपृथक्पृथक्पर्युदा
सेनिमित्तं॰ तेनासमानार्षेयामसमानगोत्रजामिति॥ तथाचभृगुः समानगोत्रप्रव
रैर्विवाहयन्निय॥ असंभाष्योह्यपांक्तेयः पतितः सतुनान्यथा॥ तथाचासमानप्रवरै
र्विवाहइतिगौतमः॥ तथाच॰ असपिंडाचयामातुरसगोत्राचयापितुरितिमनुः॥ तथा॰
मातृगोत्रामप्यपरिणेयांकेचिदिच्छंति॥ तथा॰ मातुलस्यसुतामूढ्वामातृगोत्रांतथैव

व। समानप्रवरां चैव गत्वा चान्द्रायणं चरेत् इति प्रायश्चित्तस्मरणात्। अत्र च असपिण्डामित्यनेनापि
त्स्वस्य मातृष्वस्रादिदुहितृनिषेधः। तथा। असगोत्रामित्यनेन चासपिण्डाया अपि भिन्नसंतानजा
याः समानगोत्रया निषेधः। असमानप्रवरामित्यनेनापि असगोत्राया अपि समानप्रवराया निषे
धः तथा च भृगुः। एक एव ऋषिर्यत्र प्रवरेष्वनुवर्तते। तत्रापि स्यात्सगोत्रत्वमृते भृग्वङ्गिरोगणा
त्। पञ्चानां त्रिषु सामान्यादविवाहः त्रिषु द्वयोः। भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोपि वारयेत्। तथा·
असपिण्डामित्येतत्सार्ववर्णिकविषयं सर्वत्र सापिण्ड्यसंभवात्। असमानार्षगोत्रजामित्येतत्तु
त्रैवर्णिकविषयं। यद्यपि राजन्यवैश्ययोः प्रातिस्विकगोत्राभावात्प्रवराभावः। तथापि पुरो
हितगोत्रप्रवरौ वेदितव्यौ। तथा च यजमानस्यार्षेयान्प्रवृणीतेत्युक्त्वा पौरोहित्यान्राजवि
शां प्रवृणीतेत्याहाश्वलायनः। सपिण्डासु समानगोत्रासु समानप्रवरासु भार्यात्वमेव नोपपद्य
ते· रोगिण्यादिषु तु भार्यात्वे उपपन्नेपि दृष्टविरोध एव॥ असपिण्डा त्वत्र एकशरीरावयवान्वय
द्वारेण साक्षात्पारंपर्येण वा सापिण्ड्यमुक्तं· तच्च सर्वत्र सर्वस्य यथाकथंचिदनादौ संसारे संभव
तीत्यतिप्रसंग इत्यत आह॥ ॥ ॥पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा। मातृतः मा
तुः संताने पञ्चमादूर्ध्वं· पितृतः पितुः संताने सप्तमादूर्ध्वं सापिण्ड्यं विनिवर्तत इति शेषः। अ
तश्चायं सपिण्डशब्दोऽवयवशक्त्या वर्तमानोपि निर्मथ्यपङ्कजशब्दवन्नियतविषय एव। तथा
च पित्रादयः षट् सापिण्डाः पुत्रादयश्च षट् आत्मा च सप्तमः संतानभेदेपि यतः संतानभेदस्तमा

१० दायं गणयेत्॥ यावत्सप्तम इति सर्वत्र योजनीयं। तथा च भगिनी भागिनी भ्रात्री भ्रातृपुत्र पितृव्यायोः
विवाहे स्वादिभूतत्वाच्छाखाभेदोऽवगम्यते॥ यदपि वसिष्ठेनोक्तं पंचमीं सप्तमीं चैव मातृतः पितृत
स्तथा इति। त्रीन्मातृतः पंचपितृतस्त्विति पैठीनसिना तत्पूर्वोक्तनिषेधार्थं न पुन
स्तत्प्राप्त्यर्थमिति सर्वस्मृतीनामविरोधः। एतच्च समानजातीये। विजातीये तु विशेषः। यथाह
शंखः। यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः एकपिंडाः पृथक्शौचाः पिंडस्त्वावर्त्तते त्रि
षु॥ एकस्माद्ब्राह्मणादेर्जाता एकजाताः॥ पृथक्क्षेत्राः भिन्नजातीयासु स्त्रीषु जाताः पृथग्ज
नाः समानजातीयासु भिन्नासु स्त्रीषु जाताः ते एकपिंडाः सपिंडाः। किंतु पृथक्शौचाः शौचं प्रक
रणे वक्ष्यामः। पिंडस्त्वावर्त्तते त्रिषु त्रिपुरुषमेव सापिंड्यं ~~सपिंड्य~~मित्यर्थः॥ दशपूरुषविख्यातात् राम
श्रोत्रियाणां महाकुलात्॥ पुरुषः एव पूरुषः। दशभिः पुरुषैः पितृतः पंचभिः पुरुषैः मा[illegible]तत
श्च पंचभिर्विख्यातं यत्कुलं तस्मात् श्रोत्रियाणां अधीतवेदानां अध्ययनमुपलक्षणं श्रुता
ध्ययनसंपन्नानां महत्त्वं तत्कुले पुत्रपशुदासीग्रामादिसमृद्ध्या तस्मात्कन्या आहर्तव्येति गम्य
ते॥ एवं सर्वतः प्राप्तौ सत्यामपवादमाह॥ स्फीतादपि न संचारिरोगदोषसमन्वितात्॥ संचा
रिणो रोगाः कुष्ठापस्मारादयः शुक्रशोणितद्वारेणानुप्रविशंति। दोषाः पुनर्हीनक्रियानिःपुरुषत्वा
दयो मनूक्ताः। एतैः समन्वितात्स्फीतादपि नाहर्तव्या॥ करग्रहणनियममुक्त्वा कन्यादाने वरनि
यममाह॥ एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः। यत्नात्परीक्षितः पुंस्त्वे युवा धीमान् जनप्रि १०

यः ॥ एतैः पूर्वोक्तैरेव गुणैर्युक्तो दोषैश्च वर्जितो वरो भवति । तस्यायमपरो विशेषः । सुवर्ण उत्कृ
ष्टो वर्णो न हीनवर्णः । स्वयं च श्रुताध्ययनसंपन्नः । बालोपक्रमेण पुंस्त्वपरीक्षितः । परीक्षोपाय
श्च नारदेनोक्तः ॥ यस्याप्सु प्लवते वीर्यं ह्लादि मूत्रं च फेनिलं । पुमान्स्याल्लक्षणैरेतैर्विपरीतै
स्तु षंढकः इति । युवा न वृद्धः । धीमान् लौकिकव्यवहारेषु निपुणमतिः । जनप्रियः स्मितम
ृदुपूर्वाभिभाषणादिभिरनुरक्तजनः । रतिपुत्रधर्मार्थत्वेन विवाहस्त्रिविधः ॥ तत्र पुत्रार्थो द्वि
विधो नित्यः काम्यश्च ॥ तत्र नित्यप्रजार्थे सवर्णः श्रोत्रियो वर इत्यनेन सवर्णामुख्यादर्शिता
॥ ॥ इदानीं काम्यनित्यसंयोगेनानुकल्पमवक्तव्यमित्याह ॥ ॥ यदुच्यते द्विजातीनां शूद्रा
दारोपसंग्रहः । नैतन्मम मतं यस्मात्तत्रात्मा जायते स्वयं ॥ यदुच्यते कामतस्तु प्रवृत्तानामिमाः
स्युः क्रमशो वरा इत्युपक्रम्य ब्राह्मणस्य चतस्रो भार्याः क्षत्रियस्य तिस्रो वैश्यस्य द्वे इति । द्विजाती
नां शूद्रावेदनमिति नैतद्याज्ञवल्क्यस्य मतं । यस्माद्यो द्विजातिस्तत्र स्वयं जायते । तज्जाया
भवति यदस्यां जायते पुनरिति श्रुतेः । अत्र च तत्रायं जायते स्वयमिति हेतुवदनात् नैत्यकपुत्रो
त्पादनाय काम्यकपुत्रोत्पादनाय वा प्रवृत्तस्य शूद्रापरिणयननिषेधं कुर्वता नैत्यकपु
त्रोत्पादनानुकल्पे काम्यकपुत्रोत्पादने ब्राह्मणस्य क्षत्रियवैश्ये क्षत्रियस्य वैश्या अभ्यनुज्ञाता
भवति ॥ ॥ इदानीं रतिकामोत्पन्नपुत्रस्याविनष्टभार्यस्याश्रमान्तरेष्वनधिकारिणो गृहस्था
श्रमावस्थामात्राभिकाङ्क्षिणः परिणयनक्रममाह ॥ ॥ तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथा

क्रमं॥ ब्राह्मणक्षत्रियविशां भार्याः स्वा शूद्रजन्मनः॥ वर्णानुक्रमेण ब्राह्मणस्य तिस्रः। क्षत्रियस्य द्वे वैश्य
स्यैका· शूद्रस्य स्वैव भार्या भवति॥ सवर्णा सर्वेषां मुख्या। सैव पूर्वस्याः अभावे उत्तरोत्तरा भवति॥ अनुलो
मक्रमेणैकानुकूल्ये काम्यश्च पुत्रोत्पादनविधौ· अतश्च यथधर्मे पुत्रस्य पुत्रस्य धर्मेण नैविभागकीर्तनं
च· तथा विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विन्नायां विधिः स्मृतः इति च· तद्वत्ति कामस्य अश्रमसमात्राभिकां
क्षितोवानांतरीयकतयोस्यलक्ष्य॥ ॥विवाहानाह॥ ॥ब्राह्मो विवाह आहूय दीयते शक्त्यलंकृता
॥तज्जः पुनात्युभयतः पुरुषानेकविंशतिं॥ सब्राह्मनामिधानो विवाहः। यस्मिन्नुक्तलक्षणाय वराय आ
हूय यथाशक्त्यलंकृता कन्या दीयते॥ उदकपूर्वं॥ तस्याजातः पुत्रः उभयतः पित्रादीन्दश प्रथमजः
पुनात्युत्तरजश्च दश॥ स दैवो विवाहो यस्मिन्यज्ञानुष्ठाने वितते ऋत्विजे शक्त्यलंकृता दीयते॥ यत्र
पुनर्गोद्वयमादाय कन्या दीयते उदकपूर्वं स आर्षः॥ प्रथमजो दैवविवाहजश्चतुर्दश पुनाति स सप्त पूर्वा राम
न्सप्त परान्। उत्तरज आर्षविवाहजः षट् पुनाति॥ त्रीन्पूर्वान्॥ ॥इत्युक्त्वा चरतां धर्मं सह या दीय
तेर्थिने॥ स कायः पावयेत्तज्जः षट् षट् वंश्यान्सहात्मना॥ सह धर्मं चरतामिति परिभाष्य कन्या दीयते
स कायः॥ प्राजापत्यः। तज्जः षट् वंश्यान्पूर्वान् षट् परानात्मानां सहैवं त्रयोदश पुनाति॥ ॥
आसुरो द्रविणादानाद्गांधर्वः समयान्मिथः॥ राक्षसो युद्धहरणात्पैशाचः कन्यकाछला
त्॥ अधमनास्वाया घनस्या सुहृरणात्॥ ॥सवर्णादिपरिणयने विशेषमाह॥ ॥पाणिर्ग्राह्यः सव
र्णासु गृह्णीयात्क्षत्रिया शरं॥ वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः॥ सवर्णासु विवाहेषु योक्त
विधिना पाणिरेव ग्राह्यः क्षत्रियकन्या तु शरं गृह्णीयात्॥ वैश्या प्रतोदं परार्णं आदद्यात्॥ उद्वेद

वेदने शूद्रापुर्नसनस्य दत्तां ॥ यथाह मनुः ॥ वसवस्य दत्तान्याप्याप्यन्यद्वोत्तरुषनेदृत्ति ॥ ॥ दात्
क्रममाह ॥ ॥ पिता पितामहो भ्राता सकुल्यो जननी तथा ॥ कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥
अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ॥ गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरं ॥ एषां पित्रा
दीनां पूर्वस्य पूर्वस्य अभावे परः परः कन्याप्रदः ॥ प्रकृतिस्थश्चेत् । यद्युन्मादादिदोषवान्भव
ति ॥ अतो यस्याधिकारः सोऽप्रयच्छन् ऋतौ ऋतौ भ्रूणहत्यामवाप्नोति ॥ एतच्च उक्तलक्षणवरसंभ
वे वेदितव्यं । यदा पुनर्दातॄणामभावस्तदा कन्यैव गम्यं गमनार्हं उक्तलक्षणं स्वयमेव वरं वरय
त ॥ सकृत्प्रदीयते कन्या हरंस्तां चोरदण्डभाक् ॥ कन्या सकृदेव प्रदीयते इति शास्त्रनियमः ।
अतस्तां कन्यां दत्त्वाऽपहरन् चौरवद्दण्ड्यः । एवं सर्वत्र निषेधे प्राप्ते अपवादमाह ॥ ॥
दत्तामपि हरेत्पूर्वात् श्रेयांश्चेद्वर आव्रजेत् ॥ यदि पूर्वस्माद्वरात् श्रेयान् विद्याभिजनाद्यतिश
ययुक्तो वर आगच्छति । यदि पूर्वस्य पातकयोगो दुर्वृत्तत्वं वा तदा दत्तामपि हरेत् ॥ एतच्च सप्त
मपदात्प्राक् द्रष्टव्यं ॥ अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसं ॥ अदुष्टां तु त्यजन्दण्ड्यो दूषयं
स्तु मृषा शतं ॥ यः पुनश्चक्षुषाग्राह्यदोषमनाख्याय यच्छति । असौ उत्तमसाहसं दण्ड्यः । उत्तमसा
हसमग्रे वक्ष्यति । अदुष्टां तु परिग्रह्य त्यजन् उत्तमसाहसं दण्ड्यः । यः पुनः विवाहात्प्रागेव द्वेषादि
ना असद्भिर्दोषैर्दीर्घरोगादिभिः कन्यां दूषयति स शतं पणान् वक्ष्यमाणलक्षणान् दण्ड्यः ॥ अनन्यपू

र्विकां कान्तामसपिंडां यवीयसीं॥ अनन्यपूर्विकामित्यत्र अनन्यपूर्वा परिणेया उक्ता॰ तत्रानन्यपूर्वा
कीदृशी स्यादाह॥ ॥ अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः स्वैरिणी या पतिं हित्वा सवर्णं कामतः
श्रयेत्॥ ॥ अन्यपूर्वा द्विविधा॥ पुनर्भूः स्वैरिणी चेति॥ पुनर्भूरपि द्विविधा॥ क्षता चाक्षता च॥ त
त्राक्षता संस्कारात्प्रागेव पुरुषसंबंधदूषिता॥ अक्षता पुनः संस्कारदूषिता॥ या तु कौमारं पतिं त्य
क्त्वा पुनः कामतः सवर्णमाश्रयति सा स्वैरिणी॥ ॥ एवं सर्वप्रकारेण अन्यपूर्वा परिहर्त्तव्येति प्रसंगा
द्विशेषमाह॥ ॥ अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया। सपिंडो वा सगोत्रो वा घृताभ्यक्त ऋता
वियात्। आगर्भसंभवाद्गच्छेत्पतितस्त्वन्यथा भवेत्॥ अनेन विधिना जातः क्षेत्रजोऽस्य भ
वेत्सुतः॥ ॥ एतामलब्धपुत्रां पित्रादिभिरनुज्ञातः पुत्रार्थं देवरो भर्तुः कनीयान् ज्यायान्वा सपिंडो राम
वा उक्तलक्षणः सगोत्रो वा॰ एतेषां पूर्वस्य पूर्वस्य अभावे परः परो घृताभ्यक्तः सर्वांगं वाग्यतो
वक्ष्यमाणलक्षण ऋतौ इयात् गच्छेत्। आ गर्भोत्पत्तेः। ऊर्ध्वं पुनर्गच्छन् अन्येन वा प्रकारेण गच्छन्
पतितो भवेत्। अनेन विधिना उत्पन्नः पूर्वपरिणेतुः क्षेत्रजः पुत्रो भवति॥ एतच्च वाग्दत्ता
विषयमित्याचार्याः॥ यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः तामनेन विधानेन निजो विं
देत देवर इति मनुस्मरणात्॥ व्यभिचारिणीं प्रत्याह॥ ॥ हृताधिकारां मलिनां पिंडमात्रोपजी
विनीं॥ परिभूतामधःशय्यां वासयेद्व्यभिचारिणीं॥ या व्यभिचरति तां हृताधिकारां रस्यभरणा

चधिकाररहितां मलिनां अंजनाभ्यंजनशुभ्रवस्त्राभरणरहितां प्राणयात्रामात्रोपभोगिनीं ।।
धिक्कारादिभिः परिभूतां ।। भूतलशायिनीं ।। स्ववेश्मन्येव वासयेत् । वैराग्यजननार्थं न शुध्यर्थं ।
यस्तु सः परदारेषु तच्चैनां चारयेद्व्रतमि ।। तिरश्चकं प्रायश्चित्तोपदेशात् ।। तस्याश्च प्रायश्चि
त्तार्थमर्थवादमाह ।। ।।सोमः शौचं ददौ स्त्रीणां गंधर्वश्च शुभां गिरं ।। पावकः सर्वमेध्यत्वं मेध्या
वै योषितो ह्यतः ।। परिणयनात्पूर्वं सोमगंधर्ववह्नयः स्त्रियः भुक्त्वा यथाक्रमं तासां शौचम
धुरवचः सर्वमेध्यत्वादि दत्तवंतः तस्मात्स्त्रियः सर्वत्र स्पर्शनालिंगनादिषु मेध्याः शुद्धाः
स्मृताः ।। न च तस्यास्तर्हि दोषो नास्तीत्याशंकनीयमित्याह ।। ।।व्यभिचाराद् ऋतौ शुद्धिर्गर्भे
त्यागो विधीयते ।। गर्भभर्तृवधादौ च तथा महति पातके ।। अप्रकाशितात्मनो व्यभिचारात्
पुरुषांतरसंभोगसंकल्पादेः पुनस्तस्याः ऋतौ रजोदर्शने शुद्धिः । शूद्रस्तेतु गर्भे त्यागः ।।
ब्राह्मणक्षत्रियविशां भार्याः शूद्रेण संगताः अप्रजाता विशुध्यंति प्रायश्चित्तेन नेतराः इति स्मर
णात् ।। तथा गर्भवधे भर्तृवधे महापातके ब्रह्महत्यादौ आदिग्रहणात् शिष्यादिगमने च त्यागः
। चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।। पतिघ्नी च विशेषेण जुंगितोपगता च या इत्यं
गिरः स्मरणात् ।। जुंगितः प्रतिलोमजश्चर्मकारादिः । त्यागश्च या ।। उपभोगधर्मकार्ययोः अनु
नुज्ञासनं तस्याग्रहात् । निरुध्यास्वे वेश्मनीति नियमात् ।। ।।द्वितीयापरिणयने हेतुमाह ।।
सुरापी व्याधिता धूर्ता वंध्यार्थघ्न्यप्रियंवदा ।। स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ।। सु
रां पिबतीति सुरापा । शूद्रापि । पतत्यर्द्धशरीरस्य भार्या या सुरां पिबेद् इति सामान्येन प्रतिषेधात् ।

२३ आधिता महारोगग्रस्ता·धूर्ता मिसंवादिनी·वंध्यानिःफला·अर्थघ्नी अर्थनाशिनी।। अप्रियंवदा
निष्ठुरभाषिणी·स्त्रीप्रसूः स्त्रीजननी·पुरुषद्वेषिणी सर्वेषामहितकारिणी·अधिवेत्तव्येति प्रसंगे
संबध्यते·अधिवेदनं भार्यांतरपरिग्रहः।। किंच·अधिविन्ना तु भर्तव्या महदेनोन्यथा भवेत्।।
यत्रानुकूल्यं दंपत्योस्त्रिवर्गस्तत्र वर्धते।। साधिविन्ना पूर्ववद्दानमानसत्कारैर्भर्तव्याः अन्य
था अभरणे महदपुण्यं भवति·वक्ष्यमाणदंडश्च·न च भरणे केवलापुण्यपरिहारः। यतो यत्रा
नुकूल्यं चित्तैक्यं दंपत्योस्तत्र धर्मार्थकामानां प्रतिदिनमभिवृद्धिः।। स्त्रियं प्रशंसाह।। मृते जीवति
वा पत्यौ या नान्यमुपगच्छति।। सेह कीर्तिमवाप्नोति·उमया सह मोदते ~~क्रीडते पुण्यप्रभावादमुत्रे~~
चोमया सह।। ।।भर्तरि मृते जीवति वा पापाचापस्मारसंपुरुषं नैवोपगच्छति सा इह विपुलां कीर्ति
मवाप्नोति·उमया सह मोदते क्रीडते पुण्यप्रभावादमुत्रेति।। ।।अधिवेदनकारणाभावे अधि राम
वेत्तारं प्रत्याह।। ।।आज्ञासंपादिनी दक्षा वीरसूः प्रियवादिनी।। त्यजन्दाप्यस्तृतीयांशमद्
व्यभरणं स्त्रियाः।। ।।आज्ञासंपादिनी शीघ्रकारिणी·दक्षा कर्तव्यताचतुरा·वीरसूः पुत्रवती·
प्रियवादिनी मधुरभाषिणी।। यस्त्यजति अधिविंदति स राज्ञा स्वधनस्य तृतीयांशं दाप्यः निर्ध
नस्तु भरणग्रासाच्छादनादिना दाप्यः।। ।।स्त्रीधर्ममाह।। ।।स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः
परः स्त्रियाः कार्यमेष धर्म।। आशुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः।। स्त्रीभिः सदा भर्तृवच
नं कार्यं। यस्मादयमेव धर्मः परः उत्कृष्टः।। स्वर्गादिहेतुत्वात्·यदा तु महापातकदूषितस्तदा
आशुद्धेः संप्रतीक्ष्यः। न तत्स्मारतंत्र्यं·उत्तरकाले तु पूर्ववदेव तत्स्मारतंत्र्यं।। ।।ज्ञास्त्रीयदार
संग्रहस्य फलमाह।। ।।लोकानंत्यं दिवः प्राप्तिः पुत्रपौत्रकैः।। यस्मात्तस्मात्स्त्रियः सेव्याः

कर्त्तव्याश्च सुरक्षिताः ॥ लोकान्नेत्संवंशस्याविच्छेदः ॥ दिवः प्राप्तिश्च · दारसंग्रहस्य कर्यप्रयो
जनमित्याह ॥ पुत्रपौत्रप्रपौत्रकैः लोकानेत्सं· अग्निहोत्रादिकैश्च स्वर्गप्राप्तिरित्यन्वयः ॥ य
स्मात्स्त्रीभ्य एतद्द्वयं भवति तस्मात्स्त्रियः सेव्या उपभोग्याः ॥ प्रजार्थं रक्षितव्याश्च धर्मा
र्थं ॥ तथा चापस्तंबेन धर्मप्रजासंपत्तिः प्रयोजनं दारसंग्रहस्योक्तं ॥ धर्मप्रजासंपन्नेषु दा
रेषु नान्यान्कुर्वीतेति वदता रतिफलं तु लौकिकमेव ॥ ॥ पुत्रोत्पत्त्यर्थं स्त्रियः सेव्या इत्यु
क्तं तत्र विशेषमाह ॥ ॥ षोडशर्त्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् ॥ ब्रह्मचार्येव पर्वा
ण्याद्याश्चतस्रस्तु वर्जयेत् ॥ स्त्रीणां गर्भाधानयोग्यावस्थोपलक्षितः कालः ऋतुः स
च रजोदर्शनदिवसादारभ्य षोडशाहोरात्रः तस्मिन्नृतौ युग्मासु समासु रात्रिषु संविशे
त् गच्छेत् ॥ पुत्रार्थं · रात्रिग्रहणाद्दिवसप्रतिषेधः ॥ युग्मास्विति बहुवचनेन समुच्चयार्थं ·
अतश्च एकस्मिन्नृतौ अप्रतिषिद्धासु युग्मासु समासु रात्रिषु गच्छेत् ॥ एवं गच्छन् ब्रह्मचा
र्येव भवति । अतो यत्र ब्रह्मचर्यं श्राद्धादिषु चोदितं तत्र गच्छतोपि न ब्रह्मचर्यस्खलनदोषो
स्ति · किंच · पर्वाण्याद्याश्च वर्जयेत् · पर्वाणीति बहुवचनार्थावगमात् अष्टमीचतुर्दश्यो
र्ग्रहणं · यत आदि बहुवचनान्तागणस्य संसूचका भवंतीति वचनात् · यथाह मनुः ॥ अमावा
स्यामष्टमीं च पौर्णमासीं चतुर्दशीं ॥ ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः ॥ इत्यमा
वास्यादीन् रजोदर्शनादारभ्य चतस्रो रात्रीश्च वर्जयेत् ॥ किंच ॥ एवं गच्छन् स्त्रियं क्षामाम्

१४ घामूलं च वर्जयेत्॥ सुस्थ इंदौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान्॥ ॥एवमुक्तेन प्रकारेण स्त्रि
यं गच्छन् क्षामामेव गच्छेत्· क्षामत्वाच्च तस्मिन्काले रजस्वलात्रे तेनैव भवति॥ यदि न भवति त
दा कर्तव्या क्षामता· पुत्रोत्पत्त्यर्थं·· अल्पास्निग्धभोजनादिना॥ पुमान्पुंसोऽधिके शुक्रे स्त्री भव
त्यधिके स्त्रिया इति वचनात्॥ यद्ययुग्मायामपि रात्रौ शोणिताधिक्यं तदा स्त्री एवं भवति पर
पुरुषाकृतिः॥ अयुग्मायामपि शुक्राधिक्ये पुमान्भवति परं स्त्र्याकृतिः॥ कालस्य निमित्तत्वा
॥शुक्रशोणितयोश्चोत्पादनकारणत्वेन प्राबल्यात्· तस्मात्क्षामता कर्तव्या· मघामूलं नक्ष
त्रे वर्जयेच्च॥ चंद्रे चैकादशादिशुभस्थानगते॥ चकारात्सुनक्षत्रशुभयोगलग्नादिसंपत्तौ स
कृदेकस्यां रात्रौ न द्वित्रिर्वा· तत्तोलक्षणैर्युक्तं पुत्रं जनयति पुमानप्रतिहतपुंस्त्वः॥ ॥
एवमेतौ नियममुक्त्वा इदानीमन्यतो नियममाह॥ ॥यथाकामी भवेद्वापि स्त्रीणां वरमनुस्म
रन्॥ स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः॥ भार्यायाऋतुकालेऽननतिक्रमेण प्रवर्तितर राम
स्यास्तीति यथाकामी भवेत्॥ वाशब्दो नियमान्तरपरिग्रहार्थो न पूर्वनियमनिवृत्त्यर्थः॥ ॥
स्त्रीणां वरं इंद्रदत्तमनुस्मरन्· यथा· ता अब्रुवन्वरं वृणीमहे ऋत्वियात्प्रजां विंदामहे
काममाविजनितोः संभवामेति तस्मादृत्वियाः स्त्रियः प्रजां विंदंते काममाविजनितोः संभ
वेवरोदत्तोह्यासामिति॥ अपि च स्वदारेष्वेव निरतः स्यात्॥ न अन्यस्त्रीं भवेदित्यनुषज्यते· ए
वकारेणान्यस्त्रीतरगमनं निवर्तयति। प्रायश्चित्तस्मरणात्॥ उभयत्रापि हेतुं प्रयोजनमाह॥
स्त्रियो रक्ष्या यतः स्मृता इति॥ यस्मात्स्त्रियो रक्ष्याः स्मृताः उक्ताः कन्यामाश्च सुरक्षिता इति·

तत्त्वसुरक्षणं यथाकामित्वेन स्यात् तदानेनेन च भवतीति ।। तत्र हन्तास्मिन् युगपत्सु संनिवेशोऽस्तीति किम
यं विधिर्नियमः परिसंख्या वा उच्यते । न तावद्विधिः । प्राप्तार्थत्वात् । नापि परिसंख्या दोषत्रयसमास
क्तेः ।। विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयत इति दोषत्रय
समासक्तेः ।। अतो नियमं प्रतिपेदिरे न्यायविदः । कः पुनरेषां भेदः । उच्यते । अत्यन्ताप्राप्तप्रापणं विधिः यथाग्निहो
त्रं जुहुयात् । अष्टकाः कर्तव्या इति । पक्षे प्राप्तस्याप्राप्तपक्षान्तरप्रापणं नियमः । यथा समे य
जेतेति । दर्शपौर्णमासाभ्यां यजेतेति यागः कर्तव्यतया विहितः स च देशमन्तरेण कर्तुं न शक्यत इत्य
र्थाद्देशः प्राप्तः ।। स च समो विषमश्चेति द्विविधः । यदा यजमानः समेऽपि यक्ष्यते तदा समे यजेतेतीदं
वचनमुदास्ते । स्वार्थस्य प्राप्तत्वात् । यदा तु विषमदेशेऽपि यक्ष्यते तदा समे यजेतेतीदं वचनं स्वार्थवि
धत्ते स्वार्थस्य तदानीमप्राप्तत्वात् । विषमदेशनिवृत्तिश्चार्थाच्चोदितदेशेनैव यागनिष्पत्तेः स्वार्थादे
नदेशोपादानेन यथाशास्त्रं यागोऽनुष्ठितः स्यात् । तथाप्याहुर्मुख्या नानि परिसंख्या । तद्यथा । इमा
मगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त इति । अत्र मन्त्रः स्वसामर्थ्यादश्वाभिधान्या गर्द
भाभिधान्याश्च रशनामृतस्येत्यस्य सर्वस्या ग्रहणे विनियुक्तः ।। पुनरश्वाभिधानीमादत्त इति वचनेन
आश्वाभिधान्यां विनियुज्यमानो गर्दभाभिधान्या निवर्त्यत इति । तथा पञ्च पञ्चनखा भक्ष्या इति । अ
त्र हि पदद्वयात् शशादिपञ्चनखभक्षणं प्राप्तं पुनः शशादिश्रूयमाणं श्वादिभ्यो निवर्त
यती ।। किं पुनरत्र युक्तं परिसंख्येत्याह ।। तथाहि । तत्तद्दारसंग्रहस्य स्वेच्छयाप्राप्तौ गमनं प्राप्त
मिति न विधेरयं विषयः ।। नापि नियमस्य गमनस्य स्मृतिविरोधात् । एवं हि स्मरन्ति त्रिप्रकाराः दारा

१५ दारसंग्रहानंतरं निराग्नेर्दारस्याग्नेः संभवस्तरं यान्नतो स्यादिति । ननु दारदशायां नासंभवस्तस्यादायूर्वमेव ऋत
तौ गच्छेदेवेति नियमात्तत्रापत्यार्थस्मरणं बाधेत । अपि च प्रसिभावार्थस्वन्ते विशेषणपरस्मृतः । प्रासंचेत्रेन्तौ
गमने नित्यप्राप्त्यमेवेति । ऋतौ गच्छेदेवेति नियमो नर्थकास्यात् नियमेवाद्दृष्टकल्पनीयं । किं च ऋतौ गंतव्य
मेवेति नियमे ऽसन्निहितस्य मन्त्राद्यारादि नाऽसमर्थस्य प्रतिषेध्यादाकांक्षितुपदिष्टः स्यात् । विध्यनु
वादविरोधश्च नियमे । तथा हि । सकृदुच्चरितस्तमेवार्थपक्षे प्रनुवदति पक्षे प्रनुविधत्ते चेति । तस्मा
दृतावेव गच्छन्नानन्यत्रेति परिसंख्यैव युक्ता । तदिदमाह । विविश्वरूपादर्थाना तु मन्यंते । यत्नो नियं
मस्तवयुक्तः । पक्षे स्वार्थविधिसंभावात् ॥ गमने दोषश्रवणाच्च ॥ ऋतुस्नातां तु यो भार्यां सन्नि
धौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशय इति ॥ न च विध्यनुवादविरोधो नुवाद
मावादिश्चर्यस्तच्चवत्तनस्य । तत्र हि विध्यनुवादविरोधो यत्र विधेयावधित्वयान्तद्वानुवदितव्य राम
मप्राप्तमयाभीदृशेन विधातव्यमिति ॥ यथा वाजपेयाधिकरणपूर्वपक्षे वाजपेयेन स्वाराज्यका
मो यजेतेति । वाजपेयलक्षणगुणविधानाविधित्वेन मागानुवर्तित्वेः । स एव स्वाराज्यलक्षण
फलोद्देशेन विधातव्य इति । न त्वानुवादेनेह कश्चित् समस्ति । यच्च नियमपक्षे पदृष्टपरिकल्पनमित्युक्तं
तत्परिसंख्यायामपि समानं । अन्यत्रागच्छतो दोषकल्पनात् । यत्तु नैयमिकपुत्रोत्पादनविधावित्ते
येषु कन्येतौ नित्यगमनप्राप्तेर्नियम इति । स एवायं नैयमिकः पुत्रोत्पादनविधिः स्यान्न तरावगच्छ
न्नस्ति यं भार्यां मलक्षणं पुत्रं जनयेदिति । स्वाभिगमनातिरिक्तः पुत्रोत्पादनविधिरिति । तच्चन । ग
मनेनारणिकायाभावनायाः एव पुत्रोत्पत्तिकर्मतामपेक्ष्यते । एवं गच्छन्नलक्षणं पुत्रं जनयेदित्यनेन य
थाग्निहोत्रं जुहुयात् स्वर्गभावयेदिति । न चासन्निहितदेशकामार्थविधिप्रसंगः । संनिहितत्वात्ऋतोरेवो १५

 स्थाने निवेशितं उपस्करो गृहोपस्करवर्गीयथासौ तथोक्तः यथोलूखलमुसलशूर्पादेः कृते तस्या
ने रथवत्पलव्यारविद्योगे नेव्वणस्यान इत्यादि ॥ दक्षा गृहव्यापारकुशला हृष्टा सदैवप्रहसितवद
नाध्ययपराङ्मुखी नप्यपत्तशीला सर्वत्र स्यादिति शेषः । किंच श्वश्रूश्वशुरयोः श्वश्रूश्वशुरौ श्व
शुरः श्वश्र्वा इत्सेकशेषः । तयोः पादवन्दनतत्परा कुर्यात् ॥ श्वशुरग्रहणं मान्यान्तरोपलक्षणार्थं ॥ भ
र्तृतत्रावर्तिनी सती पूर्वोक्तं कुर्यात् ॥ ॥ भर्तृसन्निधावुक्तं प्रोषिते भर्तरि किंकर्तव्यमित्याह ॥ ॥
क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनं ॥ हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥ ॥ देशान्त
रगतभर्तृका क्रीडां कन्दुकादिभिः शारीरसंस्कारं उद्वर्तनादिभिः । समाजो जनसमूहः । उत्सवो विवा
हादिः । तयोर्दर्शनं हास्यं विश्रंभेण परगृहे यानं च संत्यजेत्प्रत्येकं संबध्यते ॥ किंच रक्षेत्कन्यां
पिता विन्नां पतिः पुत्रास्तु वार्धके । अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित्स्त्रियाः ॥ विवाहात्प्राक्कन्याप
तां कन्यामकार्येभ्यः पिता रक्षेत् ततः ऊर्ध्वं भर्ता तदभावे पुत्राः वृद्धभावे तेषामुक्तानामभावे ज्ञातयः राम
ज्ञातीनामभावे राजा पक्षद्वयावसाने तु राजा भर्ता प्रभुः स्त्रिया इति वचनात् । अतः स्त्रीणां न
क्वचिदपि स्वातन्त्र्यं ॥ किंच पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः । हीना न स्याद्विना भर्त्रा गर्हणी
यान्यथा भवेत् ॥ भर्त्रा विना भर्तृरहिता पित्रादिरहिता न स्यात् ॥ रक्षसा न रहिता गर्हणीया निंद्या
स्यात् ॥ एतच्च ब्रह्मचर्यपक्षे भर्तरि प्रेते ब्रह्मचर्यं तदन्वारोहणं वेति विष्णुस्मरणात् । अन्वारोह
णे च महानभ्युदयः ॥ तथा च व्यासः कपोतिकाख्यानव्याजेन दर्शितवान् ॥ पतिव्रता संप्रदीप्तं
प्रविवेश हुताशनं । तत्र चित्राङ्गदधरं भर्तारं सान्वपद्यत ॥ ततः स्वर्गं गतः पक्षी भार्यया सह सं
गतः । कर्मणा पूजितस्तत्र रेमे च सह भार्यया ॥ इति ॥ तथा च शङ्खाङ्गिरसौ तिस्रः कोट्योऽर्धको 

टीचयानिलोमानिमानुषे॥ तावत्कालं वसेत्स्वर्गे भर्त्तारं यानुगच्छति॥ इति प्रतिपाद्यतयोरनुयोगदर्शय
तः। व्यालग्राही यथा सर्पं बिलादुद्धरते बलात्। तद्वदुद्धृत्य सा नारी सह तेनैव मोदते॥ तत्र सा भर्तृप
रमा स्तूयमानाप्सरोगणैः। क्रीडते पतिना सार्धं यावदिन्द्राश्चतुर्दश॥ तथा च ब्रह्मघ्नो वा कृतघ्नो वा भ
वेत्पतिः॥ पुनाति सविधवा नारी तमादाय मृता तु या॥ मृते भर्त्तरि या नारी समारोहेद्धुताशनं। सारुन्ध
तीसमाचारा स्वर्गलोके महीयते॥ यावच्चाग्नौ मृते पत्यौ स्त्री नात्मानं प्रदाहयेत्। तावन्न मुच्यते सा
हि स्त्रीशरीरात्कथंचनेति। हारीतोपि। मातृकं पैतृकं चैव यत्र कन्या प्रदीयते। कुलत्रयं पुनात्येषा
भर्त्तारं यानुगच्छतीति॥ प्रानीते मुदिते हृष्टा परोक्षमतिना भागदशाम्रते च निर्पत्ते पत्यौ सा स्त्री हि
या पतिव्रता॥ अथ चैव सर्वासां स्त्रीणामगर्भिणीनां अबालापत्यानां आचाण्डालं साधारणो धर्मः
॥ भर्त्तारं यानुगच्छतीत्यविशेषोपादानात्॥ यानि च ब्राह्मण्यनुगमननिषेधपराणि वाक्यानि॥ मृ
तानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात्। जीवन्ती तु हितं कुर्यान्मरणादात्मघातिनी॥ या स्त्री ब्रा
ह्मणजातीया मृतं पतिमनुव्रजेत्॥ सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेदित्यादीनि पृथक् तानि
चित्यारोहणविषयाणि। पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हतीति विशेषस्मरणात्॥ अनेन क्ष
त्रियादिस्त्रीणां पृथक्चितिः सह्यनुज्ञायते॥ मनुके त्विदुक्तं पुरुषाणामिव स्त्रीणामप्यात्महननस्य
प्रतिषिद्धत्वादिति प्रवृद्धस्वर्गाभिलाषायाः प्रतिषेधशास्त्रमतिक्रामस्याप्यनुगमनोपदेशः।
श्येनवत्। श्येनेनाभिचरन्यजेतेति। यथा तीव्रक्रोधाक्रान्तस्यानस्य प्रतिषेधशास्त्रमतिक्रा
मतः श्येनोपदेश इति। तदयुक्तं। यत्र वा तत्र श्येनकरणिकायाभाव्यभूतहिंसाया विधिसंस्पर्शा

१७ भावेन प्रतिषेधसंस्पर्शाभावल द्वारेणश्येनस्यानर्थसंसर्गोऽपि तत्तेषामनेहिंसायाएनस्वर्गार्थत्वमान्ननुगमन
मनशास्त्रेण विधीयमानत्वात् प्रतिषेधसंस्पर्शाभावदग्नीषोमीयवत्स्वयमेवानुगमनस्य स्वरूपेण वैधत्वं ॥ यत्तु म
तेहिंसानाममरणानुकूलो व्यापारः श्येनश्चपरमरणानुकूलव्यापारत्वाद्धिंसैव ॥ कामाधिकारेऽस्वकरणा
शेषागतः प्रवृत्तिसंभवेन विधेरप्रवर्तकत्वात् रागप्रयुक्तहिंसास्वरूपत्वादेरूपेनः प्रतिषिद्धः स्वरूपेणा
नर्थहेतुः तत्रान्वनुगमनशास्त्रेण मरणस्यैव स्वर्गसाधनतया विधानात् मरणेप्यपि रागतः प्रवृत्तिः स्व
यापि मरणानुकूले व्यापारे ग्राग्निप्रवेशादौ विहितकर्त्तव्यताबोधे विधितात्पर्यप्रवृत्तिरिति न निषेधस्याव
काशः ॥ यावंत्यश्चवत्तमाले ऽतस्मृतिका मरतिवुक्ता तस्मात्स्वयमेवानुगमनस्य स्वरूपेण वैधत्वं ॥ यत्तु तस्मा
दुहनपुरायुषः स्वःकामी प्रेयादिति श्रुतेर्विरोधादनुगमनमयुक्तं तन्न ॥ स्वःकामी आयुषः प्राक्
न प्रेयादिति स्वर्गफलोद्देशेनायुषः प्रागापुण्यपीन कर्त्तव्यो मोक्षार्थिना । यस्मादायुषः शेषसत्ति
त्यनैमित्तिककर्मानुष्ठानक्षपितान्तःकरणकल्मषस्य श्रवणमनननिदिध्यासनसंपत्तौ साक्षात्कारा
तेन नित्यनिरतिशयानन्दब्रह्मप्राप्तिलक्षणमोक्षसंभवः ॥ तस्मादनित्याल्पसुखस्वरूपस्वर्गार्थमा राम
युर्व्ययो न कर्त्तव्य इत्यर्थः ॥ अतश्च मोक्षमनिच्छसाऽनित्याल्पसुखस्वरूपस्वर्गार्थिन्याऽनुगमनं यु
क्तं ॥ उत्तरकाम्यानुष्ठानवदिति सर्वमनवद्यं ॥ किंच ॥ पतिप्रियहिते युक्ता स्वाचारा विजितेन्द्रिया ॥
सह कीर्तिमवाप्नोति प्रेत्य चानुत्तमां गतिं ॥ प्रियं मनसोऽनुकूलं सांपत्यं पश्चात्करं तद्धितं । पत्युः प्रियं च हि
तं च तस्मिन्युक्ता निरता । स्वाचारा शोभन आचारो यस्याः सा तथोक्ता । शोभनत्वमाचारस्य दर्शितं शं
खेन । नानुक्ता गृहान्निर्गच्छेत् नानुत्तरीया न त्वरितं व्रजेत् । न परपुरुषमभिभाषेतान्यत्र वणिक्
प्रव्रजितवृद्धवैद्येभ्यो न नाभिं दर्शयेत् ॥ आगुल्फाद्वाससः परिदध्यात् न स्तनौ विवृतौ कुर्यात् । न
हसेदपावृतं न भर्तारं तद्बंधून्वा द्विष्यात् न गणिकाधूर्ताभिसारिणीप्रव्रजिताप्रेक्षणिकामाया

१८ ॥सवर्णेभ्यः सवर्णासु जायंते हि सजातयः॥ अनिंद्येषु विवाहेषु पुत्राः संतानवर्द्धनाः॥ सवर्णेभ्यो ब्राह्मणादिभ्यः
सवर्णासु ब्राह्मण्यादिषु सजातीयामातापित्रोः समानजातीयाः पुत्रा भवंति· विन्नास्वेष विधिः स्मृत इत्यस्य
तएव॥ सवर्णशब्दः स्पष्टार्थः॥ अतश्चायमर्थः संपन्नः॥ उक्तेन विधिनोढायां सवर्णायां वोढुः सवर्णात्तदु
त्पन्नस्तत्समानजातीयो भवति· अतश्च कुंडगोलककानीनसहोढादीनामसवर्णत्वमुक्तं भवति· तेच
सर्वेभ्योनुलोमेभ्यश्च भिद्यमानाः साधारणधर्मैरहिंसादिभिरधिक्रियंते· शूद्राणां तु सधर्माणः सर्वेप
ध्वंसजाः स्मृताः इति स्मरणात्॥ अपध्वंसजा व्यभिचारजाः शूद्रधर्मैरपि द्विजशुश्रूषादिभिरधिक्रियंते
॥ननु कुंडगोलकयोर्ब्राह्मणत्वे श्राद्धप्रतिषेधोऽनुपपन्नो न्यायविरोधश्च· यो यज्जातीयाद्यज्जा
तीयायामुत्पन्नः स तज्जातीय एव॥ यथा गोर्गवि गौः अश्वादश्वायामश्वः। तस्माद्ब्राह्मणाद्ब्राह्म
ण्यामुत्पन्नो न ब्राह्मण इति विरुद्धं॥ तथा कानीनपौनर्भवादीन् अनुक्रम्य सजातीयेष्वयं प्रोक्तस्तन राम
येषु मया विधिरिति वक्ष्यति तद्विरोधश्च· नैतत्सारं ब्राह्मणाद्ब्राह्मण्यामुत्पन्नो ब्राह्मण इति भ्रमनि
त्रेत्यर्थः॥ श्राद्धप्रतिषेधो यथा संतमग्नासस्यपतितस्य श्राद्धे प्रतिषेधः॥ न च न्यायविरोधश्च· यत्र
प्रत्यक्षगम्या जातिस्तत्र तथा· ब्राह्मणादिजातिस्तु स्मृतिलक्षणा· यथा स्मरणं भवति· यथा समाने
पित्रा ब्राह्मण्ये पकुंडिनो वासिष्ठोऽत्रिगौतम इति स्मरणलक्षणं गोत्रं· तथा मनुष्यत्वे समानेपि ब्राह्मण्या
दिजातिः स्मरणलक्षणा मातापित्रोश्चैतदेव जातिलक्षणं· न चानवस्था अनादित्वात्संसारस्य शब्दा
र्थव्यवहारवत्॥ सजातीयेष्वयं प्रोक्त इति चोक्तानुवादत्वाद्यथासंभवं व्याख्यास्यते॥ क्षेत्रजस्तु मात्र
समानजातीयो नियोग इति स्मरणात् शिष्टसमाचाराच्च· यथा· धृतराष्ट्रपांडुविदुराः क्षेत्रजाः संतो
मातृसजातीया इत्यलमतिप्रसंगेन॥ किंच· अनिंद्येषु विवाहेषु ब्राह्मादिषु पुत्राः संतानवर्धनाः अग्रेणिएणे १७

दीर्घायुषो धर्मप्रज्ञाः संपन्ना भवंति सवर्णानुक्त्वेदानीमनुलोमानाह ॥ ॥विप्रान्मूर्द्धावसिक्तो हि क्षत्रि
यायां विशः स्त्रियां ॥ अंबष्ठः शूद्र्यां निषादो जातः पारसवोपि वा ॥ ब्राह्मणेन क्षत्रियायां विन्नायां उत्पन्नो
मूर्द्धावसिक्तो नाम पुत्रो भवति ॥ वैश्यकन्यायां विन्नायां अंबष्ठः शूद्रायां विन्नायां निषादः निषादेना
मकेश्चिन्मत्स्यघातजीवी प्रतिलोमजः समाभूदिति पारसवोयं निषाद इति संज्ञाविकल्पः विप्रादित्यस्
नुवर्तते यत्तु ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रिय एव भवति क्षत्रियेण वैश्यायां वैश्य एव वैश्ये
न शूद्रायां शूद्र एवेति शंखस्मरणं तत्क्षत्रियादिधर्मप्राप्त्यर्थं न पुनर्मूर्द्धावसिक्तादिजातिनिराकर
णार्थं क्षत्रियादिजातिप्राप्त्यर्थं वा ॥ अतश्च मूर्द्धावसिक्तादीनां क्षत्रियादेरुक्तैरेव दंडाजिनोपवीता
दिभिरुपनयनादिकार्यं । प्रागुपनयात्कामचारादि पूर्ववदेव वेदितव्यं ॥ वैश्याशूद्र्योस्तु राजन्यान्माहिष्यो
ग्रौ सुतौ स्मृतौ ॥ वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः ॥ वैश्यायां शूद्र्यां च विन्नायां राज
न्यान्माहिष्योग्रौ यथाक्रमं पुत्रौ भवतः वैश्येन शूद्रायां विन्नायां करणो नाम पुत्रो भवति ॥ एष सव
र्णमूर्द्धावसिक्तादिसंज्ञाविधिर्विन्नासु ऊढासु स्मृत उक्तो वेदितव्यः ॥ एते च मूर्द्धावसिक्तांबष्ठनि
षादमाहिष्योग्रकरणाः षडनुलोमजाः पुत्रा वेदितव्याः ॥ अथ प्रतिलोमानाह ॥ ॥ब्राह्मण्यां
क्षत्रियात्सूतो वैश्याद्वैदेहिकस्तथा ॥ शूद्राज्जातस्तु चांडालः सर्वधर्मबहिष्कृतः ॥ ~~किंच क्षत्रिया~~
~~मागधं वैश्याच्छूद्रादायोगवं~~ क्षत्तारमेव च ॥ ब्राह्मण्यां क्षत्रियवैश्यशूद्रेभ्य उत्पादिता यथाक्रमं सूतवैदे
हिकचांडालाख्याः पुत्रा भवंति । तत्र चांडालः सर्वधर्मबहिष्कृतः ॥ किंच क्षत्रियायां मागधं वैश्या
च्छूद्रात्क्षत्तारमेव च ॥ शूद्रादायोगवं वैश्यजनयामास वै सुतं ॥ ॥क्षत्रियायां पितृ वैश्यान्मा

ब्राह्मणेनवैश्यायामुत्पादितांबष्ठोप्यनेनप्रकारेणपंचमीषष्ठंब्राह्मणंजनयति।।मूर्द्धावसिक्ता
प्यनेनप्रकारेणचतुर्थीपंचमंब्राह्मणंजनयति।।एवमुग्राक्षत्रियोढामाहिष्यायथाक्रमंषष्ठेपंचमे
चक्षत्रियंजनयति।तथाकरणीवैश्योढापंचमेवैश्यमित्येवमन्यत्राप्यूहनीयं।।किंच·कर्मणोप
सप्तैवस्यपीनाकर्मणामपसर्येविपर्यासेयथाब्राह्मणोमुख्यावृत्त्याऽजीवन्क्षात्रेणकर्मणाजी
वेत्तदनुकल्पस्तेनाप्यजीवन्वैश्यवृत्त्यातथाप्यजीवन्शूद्रवृत्त्या।।क्षत्रियोपिस्ववृत्त्याऽजीवन्
वैश्यवृत्त्याशूद्रवृत्त्यावा।।वैश्योपिस्ववृत्त्याऽजीवन्शूद्रवृत्त्या।इतिकर्मणामपसर्यः·तस्मिन्न्या
य्येसतियथापूर्वमेकोपितांवृत्तिंनसृजति·तदासप्तमेषष्ठेपंचमेवाजन्मनिसाम्यं·यस्य
हीनवर्णस्यकर्मणाजीवतितत्समानजातित्वंभवति।।तद्यथा·ब्राह्मणःशूद्रवृत्त्याजीवंस्ता
मपरित्यजन्यदिपुत्रमुत्पादयतिसोपितयैववृत्त्याजीवन्पुत्रांतरमित्येवंपरंपरयासप्तमेजन्म
निशूद्रं·वैश्यवृत्त्याजीवन्पंचमेवैश्यं।वैश्योपिशूद्रवृत्त्याजीवंस्तामपरित्यजन्पंचमेजन्मनि
शूद्रमेवजनयतीति।।पूर्ववदत्रापरोत्तरे।।अस्यार्थः·वर्णसंकरेऽनुलोमजाःप्रतिलोमजा
श्चदर्शिताः।।संकीर्णसंकरजानामरथकारादिदर्शनेनदर्शिताः।।उदंतोवर्णसंकीर्णसंक
रजाताःप्रदर्श्यंते·अधरेत्वनुत्तरे।यथामूर्द्धावसिक्तायांक्षत्रियवैश्यशूद्रैरुत्पादिताःतथा
अंबष्ठायांवैश्यशूद्राभ्यांनिषाद्यांशूद्रेणोत्पादिताः·अधराःप्रतिलोमजाः।।तथामूर्द्धाव
सिक्तांबष्ठनिषादीषुब्राह्मणोत्पादिताः·माहिष्योग्रयोर्ब्राह्मणेनक्षत्रियेणचोत्पादिताः
करण्यांब्राह्मणेनक्षत्रियेणवैश्येनचोत्पादिताउत्तरेऽनुलोमजाः।।एवमन्यत्राप्यूहनीयं।।

२० एतदध्वरेनेत्रं पूर्ववदसमवहितेदिवेदितव्यमिति॥ ॥इति जातिविवेकप्रकरणं॥ श्रौतस्मार्तानि कर्मा
णि गृहसाध्यानि दर्शयिष्यन् कस्मिन्नग्नौ किं कर्तव्यमित्याह॥ ॥कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्र
त्यहं गृही॥ दायकालाहृते वापि श्रौतं वैतानिकाग्निषु॥ स्मार्तं स्मृत्युक्तं वैश्वदेवादिकं कर्म लौकिकं च प्रत्या
हिकं पाकं च गृहस्थो विवाहाग्नौ विवाहसंस्कृतेऽग्नौ कुर्वीत। दायकालाहृते वा। दायकाला
दिने मानीये सादिनोक्तसंस्कारसंस्कृतेऽपि ज्ञातव्यं प्रेते वा गृहपतौ आहृते संस्कृते एव वा॥ तत्र
श्वकालत्रयातिक्रमे प्रायश्चित्तीयते॥ श्रौतं कर्माग्निहोत्रादिकं वैतानिकाग्निषु आहवनीयादि
षु कुर्वीत॥ गृहस्थधर्मानाह॥ ॥शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः॥ प्रातःसंध्यामु
पासीत दन्तधावनपूर्विकाम्॥ शरीरचिन्तामावश्यकीं दिवासंध्यासु कर्णस्थब्रह्मसूत्र उदङ्मु
पासीत दन्तधावनपूर्विकां॥ शरीरचिन्तां निर्वर्त्य गन्धलेपक्षयकरमित्युक्तविधिना कृतशौचविधिर्द्विजो दन्तधावने राम
खदिरादियुक्तेन विधिना निर्वर्त्य गन्धलेपक्षयकरमित्युक्तविधिना ... कण्टकि क्षीरवृक्षोद्भवं द्वादशाङ्गुलसंमितं॥
पूर्विकां प्रातःसंध्यामुपासीत दन्तधावनविधिश्च॥ कण्टकि क्षीरवृक्षोत्थं द्वादशाङ्गुलसंमितं॥
दन्तधावनमुद्दिष्टं तत्कालेऽन्यत्र निकाम्यत॥
कनिष्ठिकाग्रवत्स्थूलं पर्वार्धकृतकूर्चकं॥ दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिकान्यथा॥
अत्र च सोमस्येनेन तृणलोष्ठाङ्गुल्यादिनिषेधः। पालाशाश्वत्थादिनिषेधश्च स्मृत्यन्तरा
त्॥ दन्तधावनमन्त्रश्च। आयुर्बलं यशो वर्चः प्रजापशुवसूनि च॥ ब्रह्म प्रज्ञां च मेधां च
त्वं नो देहि वनस्पते॥ इति ब्रह्मचारिप्रकरणोक्तस्यापि संध्यावन्दनस्य पुनर्वचनं दन्तधावनपू
र्वत्वप्रतिपादनार्थं। दन्तधावनं च सप्तम्यादि ब्रह्मचारी वर्जयेदिति निषेधात्॥ हुत्वाग्नीन्सू
र्यदैवत्यान्जपेन्मन्त्रान्समाहितः॥ वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च॥ ॥प्रातःसं २०

ध्यावंदनानंतरं॥आहवनीयादीन् यथोक्तेन विधिना हुत्वा॥औपासनाग्निं वा तदनंतरं सूर्य
देवसोमेत्युदुत्यं जातवेदसमित्यादीन् मंत्राञ्जपेत्समाहितः॥प्रविसिद्धवित॥तदनंतरं वेदा
थोनिरुक्तं व्याकरणादीन् अवलोकनाधिगच्छेत्॥जानीयात्॥चकारादधीतं चाभ्यस्येत्॥विवि
धानि च शास्त्राणि मीमांसाप्रभृतीनि धर्मार्थारोग्यप्रतिपादकानि अधिगच्छेत्॥ ॥जा
नीयात्॥ ~~चकारादधीतं चाभ्यस्येत्~~ उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये॥जातादेवान्
पितॄंश्चैव तर्पयेच्च वेदवित् तथा॥अनंतरं ईश्वरं अभिषेकादिगुणयुक्तं अन्यं वा श्रीमंतं अकु
त्सितं॥योगक्षेमार्थं॥अलब्धलाभो योगः लब्धपरिपालनं क्षेमः तदर्थमुपेयात् उपासीत॥
उपासनं नाम सेवा प्रतिषिद्धा वृत्तिः वेतनग्रहणेन आज्ञाकरणं सेवा तस्याश्च वृत्तित्वेन
निषेधात्॥ततो मध्याह्ने स्नानादि तेन विधिना नद्यादिषु स्नात्वा देवान् स्वगृह्योक्तान् पित
न् चकारादृषींश्च देवादितीर्थेन तर्पयेत्॥तदनंतरं गंधकुसुमाक्षतैः हरिहरहिरण्य
५८ गर्भप्रतीनां यथावासनं ऋग्यजुःसाममंत्रैस्तल्लिंगैः शांतैः स्वनामभिर्वा चतुर्थ्यंतैर्नमस्का
रयुक्तैः आराधयेत् यथोक्तविधिना॥वेदाथर्वपुराणानि सेतिहासानि शक्तितः॥जपयज्ञ
सिध्यर्थं विद्यां चाध्यात्मिकीं जपेत्॥वेदाथर्वपुराणेतिहासादीनि समस्तानि वा अध्या
त्मिकीं च विद्यां जपयज्ञप्रसिध्यर्थं यथोक्तविधिना यथाशक्ति जपेत्॥बलिकर्म स्वधाहोम
स्वाध्यायातिथिसत्क्रियाः॥भूतपितृमरब्रह्ममनुष्याणां महामखाः॥बलिकर्म भूतयज्ञः॥
स्वधा पितृयज्ञः होमो देवयज्ञः स्वाध्यायो ब्रह्मयज्ञः॥अतिथिसत्क्रिया मनुष्ययज्ञः॥एतेपं

च महायज्ञा अहरहः कर्त्तव्या नित्यत्वात्॥ यत्पुनरेषां फलश्रवणं तदेषां पावनत्वख्यापनार्थं
न काम्यत्वप्रतिपादनाय॥ देवेभ्यश्च हुतादन्नाच्छेषाद्भूतबलिं हरेत्॥ अन्नं भूमौ श्वचांडाल
वायसेभ्यो विनिक्षिपेत्॥ देवेभ्यः स्वगृह्योक्तविधिना वैश्वदेवहोमे हुतात्तदवशिष्टेनान्ने
न भूतेभ्यो बलिं हरेत्। अन्नग्रहणं अपक्वव्युदासार्थं। तदनंतरं यथाशक्ति भूमौ अन्नं श्व
चांडालवायसेभ्यो विनिक्षिपेत्। चकारात् होमे पापरोगिपतितेभ्यः॥ यथाह मनुः॥ शुनां
च पतितानां च श्वपचां पापरोगिणां॥ वायसानां कृमीणां च शनकैर्निक्षिपेद्भुवीति। तत्
च सायंप्रातः कर्त्तव्यं। अथ सायंप्रातः सिद्धस्य हविष्यस्य जुहुयादिति आश्वलायनस्मरणात् राम
॥ इह केचिद्वैश्वदेवाख्यस्य कर्मणः पुरुषार्थत्वं अन्नसंस्कारकर्मत्वं चेच्छंति। अथ सायंप्रा
तः सिद्धस्य हविष्यस्य जुहुयादिति अन्नसंस्कारता प्रतीयते। अथातः पंचयज्ञा इत्युपक्रम्य एता
नेतान्यज्ञानहरहः कुर्वीतेति नित्यत्वाभिधानात् पुरुषार्थत्वं चावगम्यत इति तदयुक्तं। पुरु
षार्थत्वे संस्कारकर्मत्वानुपपत्तेः॥ तथाहि द्रव्यसंस्कारत्वपक्षे अन्नार्थता वैश्वदेवक
र्मणः॥ पुरुषार्थत्वे वैश्वदेवकर्मार्थता द्रव्यस्येति परस्परविरोधात्॥ न॥ पुरुषार्थत्वमेव युक्तं
॥ महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुरिति। तथा वैश्वदेवे निवृत्ते तु यद्यन्योऽतिथिराव्र
जेत्॥ तस्मा अन्नं यथाशक्ति प्रदद्यान्न बलिं हरेदिति मनुस्मरणात्॥ पुरुषार्थत्वे वैश्व
देवाख्यं कर्म न प्रतिपाकमावर्त्तनीयं। तस्मादस्य सायंप्रातरित्यादिना उत्पत्तिप्रयोगौ

२३ युक्तं तथापि कामार्थयोर्धर्माविरोधेनानुष्ठानं तयोर्धर्ममूलत्वात् एवं प्रतिदिनमनुष्ठानं ॥ विद्या कर्म वयो
बंधुर्वित्तैर्मान्या यथाक्रमं ॥ एतैः शूद्रोपि वार्धके मानमर्हति ॥ विद्या पूर्वोक्ता । कर्म श्रौतं स्मार्तं च । वयः
आत्मनोतिरिक्तं सप्तसप्तत्याद्यूर्ध्वं । बंधुर्बद्धः स्वजनसंपत्तिः वित्तं ग्रामेरलादिकं । एतैर्युक्ताः क्रमेण
मान्याः पूजनीयाः एतैः कर्मबंधुवित्तैः प्रभूतैः प्र६ त्वहे समस्तैर्व्यस्तैर्वा युक्तः शूद्रोपि वार्धके अ
शीतेरूर्ध्वं मानमर्हति शूद्रोप्यशीतिकोवरः इति गौतमस्मरणात् ॥ वृद्धभारिनृपस्नातास्त्री
रोगीवरचक्रिणां । पंथा देयो नृपस्तेषां मान्यः स्नातश्च भूपतेः ॥ ॥ वृद्धः प्रसिद्धः । भारी भा
राक्रांतः । नृपो भूपतिः न क्षत्रियमात्रः । स्नातो विद्याव्रतोभयस्नातः । स्त्री प्रसिद्धा । रोगी व्याधि
तः । वरो विवाहोद्यतः । चक्री शाकटिकः । चकारात् मत्तोन्मत्तादीनां ग्रहणं । वालवृद्धमत्तोन्मत्तो राम
पहतदेहभाराक्रांतस्त्रीस्नातकप्रव्रजितेभ्यश्चेति शंखस्मरणात् । एतेभ्यः पंथा देयः । एतेषु
अभिमुखायातेषु स्वपथापक्रमेणं । वृद्धादीनां राज्ञा सहपथि समवाये राजा मान्यः इतरैस्त-
स्मै पंथा देयः । एतेषु भूपतेरपि स्नातको मान्यः । स्नातकग्रहणं स्नातकमात्रप्रदर्शनार्थं । न ब्राह्म
णाभिप्रायेण । तस्य सदैव गुरुत्वात् । यथाह शंखः ॥ अथ ब्राह्मणायाग्रे पंथा राज्ञ इत्येके तन्नत्वा
निष्ठं गुरुर्ज्येष्ठश्च ब्राह्मणो राजानमतिशेते तस्मै पंथा इति ॥ वृद्धादीनामपि परस्परसमवा
ये वृद्धतराद्यपेक्षया विद्यादिभिर्वा विशेषो द्रष्टव्यः ॥ इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य
च ॥ प्रतिग्रहोधिको विप्रे याजनाध्यापने तथा ॥ वैश्यस्य क्षत्रियस्य च कारात् ब्राह्मणस्यापि २३

ज्ञानुलोमानां स्वधर्मा नाध्ययनदानानि साधारणानि कर्माणि ब्राह्मणस्याधिकाः प्रतिग्रहयाजना
ध्यापनानि। तेष्वेतेष्वसत्सुतरेण वृत्त्युपसंग्रहः। यथाह गौतमः। कृषिवाणिज्ये वा स्वयंकृते कुसीदं
चेति। अध्यापनं तु क्षत्रियवैश्ययोर्ब्राह्मणे प्रतिषेधो भवति। न स्वेच्छया। आपत्काले ब्राह्मणस्याब्रा
ह्मणाद्विद्योपयोगोनुगमनं गुरुशुश्रूषा च। समाप्ते ब्राह्मणो गुरुरिति गौतमस्मरणात्॥ एतत्तान्य
नापद्वि ब्राह्मणस्य षट्कर्माणि। त्रीणि इज्यादीनि धर्मार्थानि। प्रतिग्रहादीनि वृत्त्यर्थानि॥ षण्णां तु
कर्मणामस्य त्रीणि कर्माण्याजीविका॥ याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रह इति मनुस्मर
णात्॥ अतः इज्यादीन्यवश्यं कर्त्तव्यानि। न प्रतिग्रहादीनि। द्विजातीनामध्ययनमिज्या दानं। ब्रा
ह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः। पूर्वेषु नियमः इति गौतमस्मरणात्॥ प्राधानं क्ष
त्रियकर्म प्रजानां परिपालनं कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतं॥ प्रधानं क्षत्रियस्य
प्रजानां पालनं प्रधानं। कर्म धर्मार्थं वृत्त्यर्थं च। वैश्यस्य कुसीदकृषिवाणिज्यपशुपालनानि
वृत्त्यर्थानि कर्माणि। कुसीदं वृद्ध्यर्थं द्रव्यप्रयोगः। लाभार्थं क्रयविक्रयौ वाणिज्यं। शेषं प्रसि
द्धं॥ शस्त्रास्त्रभृत्त्वं क्षत्रियस्य। वणिक्पशुकृषिर्विशः। आजीवनार्थं॥ धर्मस्तु दानमध्ययनं
यजिरिति मनुस्मरणात्। शूद्रस्य द्विजशुश्रूषा तयाजीवन् वणिग्भवेत्॥ शिल्पैर्वा विविधैर्जीवे
त् द्विजातिहितमाचरन्॥ शूद्रस्य द्विजशुश्रूषा प्रधानं कर्म धर्मार्थं वृत्त्यर्थं च। ब्राह्मणशुश्रूषा
परमो धर्मः। विप्रसेवैव शूद्रस्य प्रधानं कर्म कीर्त्यत इति मनुस्मरणात्॥

यदातुद्विजशुश्रूषयाजीवितुंनशक्नोतितदावणिक्वृत्त्याजीवेत्। नानाविधैर्वाशिल्पैःद्विजाती-
नांहितंकुर्वन्। यादृशैःकर्मभिर्द्विजातिशुश्रूषायामयोग्यानभवतितादृशानिकुर्वीतेत्यर्थः॥ तानि
चदेवलेनोक्तानि। शूद्रधर्मोद्विजातिशुश्रूषापापवर्जनंकलत्रादिपोषणंकर्षणपशुपालनभारोद्व
हनपण्यव्यवहारचित्रकर्मनृत्यगीतवेणुवीणामुरजमृदंगवादनानीति॥ किंच। भार्यारतिःशुचि
र्भृत्यभर्ताश्राद्धक्रियापरः। नमस्कारेणमंत्रेणपंचयज्ञान्नहापयेत्॥ भार्यायामेवनसाधारण
स्त्रीषुपरस्त्रीषुवारतिरभिगमनंयस्यसतथोक्तः। शुचिर्बाह्याभ्यंतरशौचयुक्तः॥ द्विजवन्न
भृत्यादेर्भर्ता। श्राद्धानिनित्यनैमित्तिकानि। काम्यानि। क्रियस्तानकृत्वान्यानिरुद्धानि। तेषुर
तः। नमइत्यनेनमंत्रेणपूर्वोक्तान्पंचमहायज्ञान्अहरहर्नहापयेत्अनुतिष्ठेत्॥ नमस्का
रमंत्रंचकेचिद्देवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच॥ नमःस्वाहायैस्वधायैनित्यमेव
नमोनमइतिवर्णयंति॥ नमइत्यन्ये। तत्रवैश्वदेवेलौकिकेग्नौकर्तव्यो। वैवाहिकेग्नावुत्याचा
र्याः॥ ॥इदानींसाधारणधर्मानाह॥ ॥अहिंसासत्यमस्तेयंशौचमिंद्रियनिग्रहः॥
दानंदमोदयाशांतिःसर्वेषांधर्मसाधनं॥ ॥अस्तेयमदत्तानुपादानं। शौचंबाह्याभ्यंतरंचबुद्धिक
र्मेंद्रियाणांनियतविषयरतित्वं॥ इंद्रियनिग्रहः। यथाशक्तिप्राणिनामन्नोदकादिदानेनआर्त्य
पहारोदानं। अंतःकरणसंयमोदमः। आपद्ग्रस्तरक्षणंदया। अपकारेप्यपचितस्याविकारः
शांतिः॥ एतेसर्वेषांचब्राह्मणाद्याचंडालांतंधर्मसाधनं॥ ॥यथानुष्ठेयंवाकृतेवस्तु

ताभिजनकर्मणां ॥ आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथा ॥ वयोवाल्ययौवनादि । बुद्धिर्नैसर्गिकी
लौकिकवैदिककर्मव्यवहारेषु ॥ अर्थो वित्तं गृहक्षेत्रादि । वाक्वचनं वेषो । वस्त्रमाल्यादिविन्यासः । श्रुतं
पुरुषार्थशास्त्रश्रवणं । अभिजनः कुले । कर्मयज्ञसर्थप्रतिग्रहादि ॥ एतेषां वयः प्रभृतीनां सदृ
शीमनुचितां वृत्तिमाचरेत् । स्वीकुर्यात् । यथा रुद्रः स्वोचितां न यौवनोचितां । एतु धनादिष्वपि योज्यं । अ
जिह्ममवक्रां अशठामयस्करं ॥ एवं स्मार्त्तानि कर्माण्यभिधायेदानीं श्रौतानि [illegible] । एष्वनु
कामति ॥ ॥ त्रैवार्षिकाद्यधिकान्नो यः स हि सोममपि बेत् द्विजः । प्राक्सौमिकीः क्रियाः कुर्याद्यस्यान्नं वा
र्षिकं भवेत् ॥ त्रिवर्षजीवनपर्याप्तं त्रैवार्षिकं । अधिकं वा अन्नं यस्य स एव सोमं पिबेत् यागं कुर्यात् ।
नान्यो ल्पधनः ॥ अतः स्वल्पोपासिद्धत्वोयः सोमं पिबति द्विजः ॥ स पीत्तसोमपूर्वोपि तस्य नाप्नोति तत्फलं
इति दोषश्रवणात् । एतच्च काम्याभिप्रायेण । नित्यस्य आवश्यकर्त्तव्यत्वान्नियमः । यस्य वर्षजीवनप
र्याप्तमन्नं भवति स प्राक्सौमिकीः सोमयागात् प्राक् सोमं प्राक्सोमं भवाः प्राक्सौमिक्यः । स कास्ता
अग्निहोत्रदर्शपूर्णमासपशुचातुर्मास्यानि काम्यानि तद्विकारास्थत्वाः क्रियाः कुर्यात् ॥ एवं काम्या
नि श्रौतानि कर्माण्यभिधायेदानीं नित्यान्याह ॥ ॥ प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा ॥
कर्त्तव्याग्रयणेष्टिश्च चातुर्मास्यानि चैव हि ॥ संवत्सरे सोमयागः कार्यः । पशुः प्रत्ययनं अयनमयनं
प्रति । अयने दक्षिणोत्तरसंज्ञिते निरूढपशुयागः कर्त्तव्यः । तथा प्रतिसंवत्सरं । संवत्सरं संवत्सरे पशु
नायजेत । षट्सु षट्सु वा मासेष्विति के इति श्रवणात् ॥ आग्रयणेष्टिश्च सस्यो सतौ कर्त्तव्या ॥ चातुर्मा

२५ स्यान्निश्चयसंवत्सरं कर्त्तव्यानि ॥ एषामसंभवे कुर्यादिष्टिं वैश्वानरीं द्विजः ॥ ॥ एषां सोमादीनां पूर्वोक्ता
नां नित्यानां कथंचिदसंभवे तत्तत्काले वैश्वानरीमिष्टिं कुर्यात् ॥ किंच ॥ हीनकल्पं न कुर्वीत सति वित्ते
फलप्रदं ॥ ॥ यो यो हीनः कल्प उक्तः सति द्रव्ये असौ न कर्त्तव्यः । यच्च फलप्रदं काम्यकर्म न हीनकल्पे
न कर्त्तव्यं ॥ ॥ चांडालो जायते यज्ञकरणाच्छूद्रभिक्षितात् ॥ यज्ञार्थं लब्धमददद्भासः काकोपि वा भ
वेत् ॥ यज्ञार्थं शूद्रधनयाचनेन जन्मांतरे चांडालो जायते । यः पुनर्यज्ञार्थं याचितान सर्वं परित्यजति स
भासः काकोपि वा भवेत् ॥ वर्षशतं । यथाह मनुः ॥ यज्ञार्थमर्थं भिक्षित्वा यो न सर्वं प्रयच्छति ॥ स या
ति भासतां विप्रः काकतां वा शतं समाः ॥ भासः शकुंतः काकः प्रसिद्धः ॥ कुसूलकुंभीधान्यो वा त्र्याहि
कोश्वस्तनोपि वा ॥ ॥ कुसूलं कोष्ठकं कुंभी उष्ट्रिका । कुसूलं च कुंभी च कुसूलकुंभ्यौ ताभ्यां परिमितं ग्रम
धान्यं यस्य स तथोक्तः कुसूलधान्यः स्यात् कुंभीधान्यो वा ॥ अत्र स्वकुटुंबपोषणं द्वादशाहमात्र
पर्याप्तधान्यः कुसूलधान्यः । कुंभीधान्यस्तु स्वकुटुंबपोषणषडहमात्रपर्याप्तधान्यः । त्र्यह
पर्याप्तं धान्यमस्यास्तीति त्र्याहिकः ॥ श्वोभवं धान्यादि श्वस्तनं । न विद्यते श्वस्तनं यस्य स तथोक्तः ॥ कु
सूलधान्यादिसंग्रहोपायमाह ॥ ॥ जीवेद्वापि शिलोंछेन श्रेयानेषां परः परः ॥ शास्त्रादेर्निपति
तपरित्यक्तवल्लरीग्रहणं शिलं । एकैकस्य सक्तस्य कणस्योपादानमुंछः । शिलं च उंछं च शिलोंछे
तेन वा । कुसूलधान्यादिश्चतुर्विधो गृहस्थो जीवेत् ॥ एतेषां कुसूलधान्यादीनां गृहस्थानां
ब्राह्मणादीनां चतुर्णां परः परः पश्चात्पश्चात्पठितः श्रेयान् प्रशस्यतरः ॥ एतत्तु मयपि द्विजः २५

प्रवृत्तः तथापि ब्राह्मणस्यैव भवितुमर्हतीति विशेषोपशमनादियोगात्। तथा च मनुः। अद्रोहेणैव भूताना
मल्पद्रोहेण वा पुनः। या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदीति॥ विप्रमेव प्रस्तुत्य कुसूलधान्यको
वा स्यात्कुंभीधान्यक एव वा स्यादिति समभिहितत्वात्। एतच्च प्रतिसंपन्नया यायावरं प्रस्तुत्य नोनसामा
न्यविप्राभिप्रायेण। तथा सति त्रैवार्षिकाधिकान्नीयः स हि सोमं पिबेद्। ~~एतच्च अतिसंपिका~~
द्विजः इत्यनेन विरोधः। तथा च गृहस्थानां द्विविधं तत्र तत्रोक्तं। यथाह देवलः। द्विविधो गृहस्थो
यायावरः शालीनश्च तयोर्यायावरः प्रवरो याजनाध्यापनप्रतिग्रहरिक्थसंचयवर्जनात्। षट्
कर्माधिष्ठितः प्रेष्यचतुष्पदगृहग्रामधनधान्ययुक्तो लोकानुवर्ती शालीन इति॥ शालीनो
पि चतुर्विधः याजनाध्यापनप्रतिग्रहकृषिवाणिज्यपशुपाल्यैः षड्जीविन्स्येको याजनादिभि
स्त्रिभिरन्यो याजनाध्यापनाभ्यामपरः। चतुर्थस्त्वध्यापनेनैवेति। तथा च मनुः॥ षट्कर्म
को भवत्येषां त्रिभिरन्यः प्रवर्तते॥ द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवतीति॥ अत्र च प्रति
ग्रहोधिको विप्रस्यादिना शालीनस्य वृत्तयो दर्शिताः॥ यायावरस्य जीवेद्वापि शिलोंछे
नेति॥ ॥इति गृहस्थधर्मप्रकरणं॥ ॥एवं श्रौतस्मार्तानि कर्माणि गृहस्थस्याभिधायेदा
नीं स्नातानादारभ्य ब्राह्मणस्याचरणीयानि विधिप्रतिषेधात्मकमानसंकल्परूपाणि
स्नातानन्तरं प्राग्विवाहाच्च स्नातकव्रतान्याह॥ ॥न स्वाध्यायविरोध्यर्थमीहे
त न यतस्ततः॥ न विरुद्धप्रसंगेन संतोषी च भवेत्सदा॥ ब्राह्मणस्य प्रतिग्रहादर्थप्राप्तु

२६ पापादर्शिताः तत्र विशेषमनुमते। स्वाध्यायविरोधिनमर्थं अप्रतिषिद्धमपि नेहेत नान्विच्छेत्॥
नयत्तस्तत्तः कुतश्चिदविदितात्माचारात्। न विरुद्धप्रसंगेन॥ विरुद्धमयाज्ययाजनादि। प्रसंगो गीता
दिः विरुद्धं च प्रसंगश्च विरुद्धप्रसंगं। तेनेनार्थमीहेतेति संबध्यते। न सांप्रतिः प्रसंके पर्युदासा
र्थः॥ सर्वत्राप्यस्मिन्प्रकरणे नञ्राह्वः पर्युदासार्थ एव॥ अर्थालाभे विसंतोषी परित्यक्तो भवेत्
॥चकारात्संपन्नश्च। संतोषं परमास्थाय सुखार्थी संयतो भवेदिति मनुस्मरणात्॥ कुतस्त
र्हि धनमिच्छेदित्याह॥ ॥राजांतेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा॥ दंभिहैतुकपाखंडिब
कवृत्तींश्च वर्जयेत्॥ क्षुधासीदन्पीड्यमानः राज्ञो विद्वित्तवत्तां तात्॥ अंतेवासिनो वक्ष्यमा
लक्षणात्॥ याज्याः [illegible] ज्ञनाहीत् धनमाददीत क्षुधासीदन्नित्यनेनाविभागादिप्राप्त राम
कुटुंबपोषणपर्याप्तधनो [illegible] ननकुतश्चिदर्थमान्विच्छेदिति गम्यते॥ किं
च॰ दंभिहैतुकादीन्सर्वकार्येषु लौकिकरात्रीयेषु वर्जयेत्॥ चकारात्॥ विकर्मस्थाँवै
डालव्रतिकान्शठान्॥ यथाह मनुः॥ पाखंडिनो विकर्मस्थान्वैडालव्रतिकान्शठान्॥
हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेदिति॥ लोकरंजनार्थमेव कर्मानुष्ठायी दंभी।
युक्तवालेन सर्वत्र संशयकारी हैतुकः॥ त्रैविद्यविद्याऽपि रिण हीनाश्रमिणः पाखंडिनः॥ बकवदस्य वर्तनमि
तिबकुर्वति॥ यथाह मनुः॥ अधोदृष्टिर्नै निकृतिर्निष्ठुरता तया चरतीति कः स्वार्थसाधनतत्परः॥ श
ठो मिथ्याविनीतश्च बकवृत्तिचरो द्विजः इति प्रतिषिद्धसेविनो विकर्मस्थाः॥ बिडालो मार्जारः तस्येव स्वभा २६

वेश्रतेयस्यासौ वैडालवृत्तिकः ॥ धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदंभकः । वैडालव्रतिको ज्ञेयो हिं
स्रः सर्वाभिसंधकः ॥ इति स्मरणात् ॥ शठः सर्वत्र वक्रः ॥ एतैः संसर्गनिषेधादेव स्वयमेवंविधो न भवेदिति
गम्यते ॥ किंच । शुक्लांबरधरो नीचकेशश्मश्रुनखः शुचिः ॥ न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थि
तः ॥ ॥ शुक्ले प्रवरे वाससी धारयतीति शुक्लांबरधरः ॥ केशाश्च श्मश्रूणि च नखाश्च केशश्मश्रुन
खं नीचं कृत्तं केशश्मश्रुनखं यस्यासौ तथोक्तः ॥ शुचिरंतर्बहिश्च स्नानानुलेपनधूपस्रगादिभिः सुगंधी
भवेत् ॥ यथाह गौतमः ॥ स्नातको नित्यं शुचिः सुगंधः स्नानशीलः स्यादिति ॥ सुगंधत्वविधानादेव निर्गंधमाल्य
स्य निषेधः ॥ तथाच गोभिलः ॥ नागंधां धारयेत्स्रजं ॥ अन्यत्र हिरण्यरत्नस्रज इति ॥ सदा स्नातकः एवंविधो
भवेत् ॥ एतच्च विभवे सति ॥ न जीर्णमलवद्वासा भवेत्तु विभवे सतीति स्मरणात् ॥ साधारणानपि धर्मानाह ॥ भा
र्यादर्शने तस्याः पुरोवस्थितायामश्नीयात् ॥ अवीर्यवदपत्योत्पत्तिर्न स्यात् ॥ तथाच श्रुतिः ॥ जायाया अ
न्ते नाश्नीयादवीर्यवदपत्यं भवतीति ॥ अन्तेस्तया सह भोजनं दूरादेव निरस्तं नैकवासा नापि संस्थितः
उत्थितः अश्नीयादिति संबध्यते ॥ ॥ किंच । न संशयं प्रपद्येत नाकस्मादप्रियं वदेत् ॥ नाहितं नानृतं
चैव न स्तेनः स्यान्न वार्धुषी ॥ कदाचिदपि संशयं प्राणविपत्तिसंशयावहं कर्म न प्रपद्येत न कुर्यात् ॥ य
था व्याघ्रचौराग्निकूपोल्लंघनाद्युपहतदेशाक्रमणादि ॥ अकस्मान्निःकारणं किंचिदपि परुषमप्रिय
मुद्वेगकरं वाक्यं न वदेत् ॥ न चाहितमनृतं वाप्रियमपि ॥ चकारादसभ्यबीभत्साकरं च ॥ अकस्मान्न
वदेदिति संबध्यते ॥ एतच्च परिहासादिव्यतिरेकेण ॥ गुरुणापि समं हास्यं कर्तव्यं कुटिलं विनेति स्म
रणात् ॥ न च स्तेनः अन्यदीयादत्तस्य ग्रहीता न स्यात् ॥ न वार्धुषी स्यात् ॥ प्रतिषिद्धवृद्ध्युपजीवी वा

२७ धृषी। किंच। दाक्षायणीब्रह्मसूत्री वेणुमान् सकमंडलुः।। कुर्यात्प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन्।। दाक्षा
यणं सुवर्णं तद्वान् दाक्षायणी। ब्रह्मसूत्रं यज्ञोपवीतं तद्द्वयमस्यास्तीति ब्रह्मसूत्री। वेणवयष्टिमान्।। कमंड
लुमान् स्यादिति सर्वत्र संबध्यते।। अत्र च ब्रह्मसूत्रीतिकरणाद्यस्यापि यज्ञोपवीतस्य पुनर्वचनं द्वि
तीयप्राप्त्यर्थं।। यथाह वसिष्ठः। स्नातकानां द्वितीयं स्यादंतर्वासस्तथोत्तरं। यज्ञोपवीते द्वे यष्टिः
सोदकं च कमंडलुमिति।। अत्र च दाक्षायणीति सामान्याभिधानेपि कुंडलधारणमेव कार्यं।। वै
णवीं धारयेद्यष्टिं सोदकं च कमंडलुं।। यज्ञोपवीते द्वे दर्भमुष्टिः च शुभे रौक्मे च कुंडले इति मनु
स्मरणात्।। न यायाद्देवतार्चा।। मृदं उद्धृतां गां विप्रं। वनस्पतिमश्वत्थादिं प्रदक्षिणीकुर्यात्
एतान् प्रदक्षिणतः कृत्वा व्रजेत्। एवं चतुष्पथादीनपि। मृद्गां दैवतं विप्रं घृतं मधु चतुष्पथं। प्र राम
दक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीनिति मनुस्मरणात्।। न तु मेहेन्नदीछायावर्त्मगोष्ठांबु
भस्मसु। न प्रत्यग्न्यर्कगोसोमसंध्यांबुस्त्रीद्विजन्मनः।। नद्यादिषु न मेहेत् मूत्रपुरीषोत्सर्गं न कु
र्यात्।। एवं श्मशानादावपि।। यथाह शंखः। न गोमयकृष्टोप्तशाद्वलचितिश्मशानखलवल्मीकप
र्वतपुलिनेषु मेहेत। भूताधारत्वादिति। यथा अग्न्यादीन् प्रति। अग्न्यादीनामभिमुखेन मेहेत। ना
प्यत्तास्परयन्। यथाह गौतमः। न वाय्वग्निविप्रादित्यापो देवता गाश्च प्रतिपश्यन्वा मूत्रपुरीषा
त्समेध्यान्युदस्येत्। नैतान्प्रति पादौ प्रसारयेदिति। एतद्व्यतिरेकेण भूमिमयज्ञियैस्तृ
णैरंतर्धाय मूत्रपुरीषे कुर्यादिति।। ।। नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनां।। न च मूत्रं पुरी २७

षेवान्नाम्युक्तीराहुन्तारकाः ॥ नैवार्कमीक्षेत । यद्यप्यत्र सामान्येनोक्तं तथाप्युदयास्तमयराहुग्रा
सोदके प्रतिबिंबं मध्याह्न वर्त्तिन एवं प्रादिसस्येक्षणं निषिध्यते । न सर्वदा । यथाह मनुना । ने
क्षेता नचसंसृष्टमैथुनाभेन मूत्रपुरीषं नाम्बुनोक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदा
चन । नोपसृष्टं न वारिस्थं न मध्यं नभसो गतमिति ॥ उपभोगादन्यत्र नग्नां स्त्रियं नेक्षेत ॥ अन्यत्र मै
थुनादित्याश्वलायनः ॥ संसृष्टमैथुना स्तेनोपभोगा ॥ उपभोगं तेऽमनग्नामपि नेक्षेत । चकारा
त्भोजनादिकमाचरंती । तथा च मनुः । नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीं ॥ क्षुवंती
जृंभमाणां वा न चासीनां यथासुखं । नांजयंतीं स्वके नेत्रे न चाभ्यक्तामनावृतां । न पश्येत्प्रस
वेतीं च श्रेयस्कामो द्विजो न मूर्त्तिस्मरणात् मूत्रपुरीषे च न पश्येत् । तथाऽप्युक्तिः सन्राहु
तारकाश्च न पश्येत् । चकारादुदके स्व प्रतिबिंबं । न चोदके निरीक्षेत स्वरूपमिति धारणोक्ति
वचनात् ॥ अयमेव वज्र इत्येनं सर्वमंत्रमुदीरयेत् ॥ वर्षत्यप्रावृतो गच्छेत्स्वपेत्पश्चिमशिरा न च
वर्षति सति अयमेव वज्रः पाप्मानमपहन्त्विति मंत्रमुच्चारयन् ॥ अप्रावृतोऽनाच्छादितो गच्छेत्तथा
वेत । तथा नैव वर्षतीत्यति निषेधात् ॥ न च पश्चिमशिराः स्वप्यात् । चकारान्नग्नो न शयीत । ए
कश्च शून्यगृहे न च न नग्नः शयीतेति ॥ नैकः स्वप्याच्छून्यगेहे इति च मनुस्मरणात् ॥ ष्ठीवनासृ
क्शकृन्मूत्ररेतांस्यप्सु नाभिक्षिपेत् । पादौ प्रतापयेन्नाग्नौ न चैनमतिलंघयेत् ॥ ष्ठीवनमु
द्गीरणं असृक् रक्तं शकृत्पुरीषं शेषं प्रसिद्धं · एतानि अप्सु नाभिक्षिपेत् । एवं तुषादीन्

२८ पि। यथाह शंखः। तुषकेशशरीषभस्मास्थिश्लेष्मनखलोमानि अप्सु न निक्षिपेदिति। न पादेन
न पाणिना वा जलमभिहन्यादिति। अग्नौ च पादौ न प्रतापयेदिति नाप्यग्निं लंघयेत्। चकारात्
ष्ठीवनादीन्यग्नौ न निक्षिपेत् मुखेनोपधमनादिकं अग्नेर्न कुर्यादिति॥ तथा च मनुः। अग्निं मुखे
नोपधमेन्नग्नां नेक्षेत च स्त्रियं। नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत्॥ अधस्तान्नोप
दध्याच्चैनं न चैनमभिलंघयेत्। न चैनं पादतः कुर्यान्न प्राणाबाधमाचरेत् इति॥ जलं पिबे
न्नांजलिना न शयानं प्रबोधयेत्। नाक्षैः क्रीडेत् धर्मघ्नैः व्याधितैर्वा न संविशेत्॥ जलमं
जलीना सहतभ्यां पाणिभ्यां न पिबेत्। जलग्रहणं पेयमात्रोपलक्षणं॥ विद्यादिभिरात्मनो
धिकं शयानं न प्रबोधयेत्॥ नोत्थापयेत्। श्रेयांसं न प्रबोधयेदिति विशेषात्। अक्षादिभि दाम
र्न क्रीडेत्। धर्मघ्नैः पशुलंघनादिभिः कर्मभिः न क्रीडेत्। व्याधितैर्ज्वरादिभिर्भूतैरेकत्र
न संविशेत्। न शयीत। विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरं। केशभस्मतुषांगारकपालेषु
च संस्थितिं॥ जनपदग्रामकुलाचारविरुद्धं कर्म वर्जयेत्। प्रेतधूमं बाहुभ्यां नदीतरणं च
वर्जयेत्॥ केशादिषु च संस्थितिं वर्जयेत्॥ चकारादस्थिकार्पासामेध्यादिषु च॥ ॥ नाचक्षीत
धयंतीं गां नाद्वारेण विशेत्क्वचित्॥ न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः॥ परस्य क्षी
रादि पिबंतीं गां परस्मै नाचक्षीत॥ न च निवर्तयेत्॥ अद्वारेण कापथेन क्वचिदपि नगरे ग्रामे २८

 निशं।।अत ऊर्ध्वं तु छंदांसि शुक्लेषु नियतः पठेत्।।वेदांगानि तु सर्वाणि कृष्णपक्षेषु संपठेत् इति।। ।।
अनध्यायानाह।। ।।त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबंधुषु।।उपाकर्मणि चोत्सर्गे स्वशाखा
श्रोत्रिये तथा।। ।।उक्तेन क्रमेणाधीयानस्य शिष्यर्त्विग्गुरुबंधुषु मृतेषु त्र्यहमनध्यायः।।
त्रीनहोरात्रान्वर्जयेत्।।उपाकर्मणि उत्सर्गाख्ये च कर्मणि कृते त्र्यहमनध्यायः उत्सर्गे तु मनूक्ते
पक्षिण्यहोरात्राभ्यां सहास्य विकल्पः।।स्वशाखाश्रोत्रिये स्वशाखाध्यायिनि श्रोत्रिये
च मृते त्र्यहमनध्यायः।। ।।संध्यागर्जितनिर्घातभूकंपोल्कानिपातने।।समाप्य वेदं द्युनि
शमारण्यकमधीत्य च।। ।।संध्यायां मेघध्वनौ आक्रोशे निर्घाते उत्पातध्वनौ भूमिचलने उल्का
पतने मंत्रस्य ब्राह्मणस्य वा समाप्तौ आरण्यकाध्ययने च द्युनिशमहोरात्रमनध्यायः।। ।।पं राम
चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके।।ऋतुसंधिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च।। ।।पंचदश्यां
अमावास्यायां पौर्णमास्यां चतुर्दश्यामष्टम्यां च राहुसूतके चंद्रसूर्योपरागे द्युनिशमन
ध्यायः।।यत्तु ग्रहणकीर्तने दुष्टराज्ञो राहोः सूतके इति तत्र स्वास्त्यमेव विषयः ऋतुसंधिग
तासु च प्रतिपत्सु श्राद्धिकभोजने तत्प्रतिग्रहे च द्युनिशमनध्यायः।एतच्च एकोद्दिष्टव्यति
रिक्तविषयं।।तत्र तु त्रिरात्रं प्रतिग्रहादिनो विद्याने कोद्दिष्टनिकेतने।।ग्रहणकीर्तनं दुले
तिस्मरणात्।। ।।पशुमंडूकनकुलश्वाहिमार्जारमूषकैः।कृतेंतरे त्वहोरात्रं शक्रपाते त
थोच्छ्राये।। ।।अध्येतॄणां पश्वादिभिरंतरागमने कृते शक्रध्वजपतनदिवसे आरोपण
दिवसे उच्छ्रायदिवसे च अहोरात्रमनध्यायः।।द्युनिशमिति प्रसक्ते पुनरहोरात्रग्रहणं २७

संध्यागर्जितभूकंपोल्कानिपातनेष्वाकालिकज्ञापनार्थं ॥ आकालिकानिर्घातभूकंपराहुदर्शनो
ल्कापातेष्विति गौतमवचनात् ॥ निमित्तकालादारभ्य अपरेद्युर्यावत्स एव कालस्तावत् आकालं - तत्र भ
व आकालिको नामानध्यायः ॥ एतच्च प्रातःसंध्यास्तनिते सायंसंध्यास्तनिते तु रात्रिमेवा सायं
संध्यास्तनिते तु रात्रिमेव ॥ सायंसंध्यास्तनिते रात्रिं प्रातःसंध्यामहोरात्रमिति हारीतस्मरणा
त् ॥ यत्तु गौतमेनोक्तं श्वनकुलसर्पमंडूकमार्जाराणां त्र्यहमुपवासो विप्रासश्चेति ॥ तत्स्व
ध्यायाध्ययने एव ॥ ॥ श्वक्रोष्टृगर्दभोलूकसामबाणार्त्तनिःस्वने ॥ अमेध्यशवशूद्रांत्यश्म
शानपतिते ॥ ॥ क्रोष्टा शृगालः बाणो वंशः उलूको घूकः साम सामानि आर्तो दुःखितः ॥
एषां स्वादीनां निःस्वनेनावकालमनध्यायः ॥ एवं वीणादिनिःस्वनेपि ॥ वेणुवीणाभेरीमृदंग
गंत्र्यगरार्त्तशब्देष्विति गौतमवचनात् ॥ गर्दः शकटं ॥ अमेध्यादीनां संनिधानेनावकालिकोऽ
नध्यायः ॥ ॥ देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे ॥ भुक्त्वार्द्रपाणिरंभोंतरर्धरात्रेतिमारु
ते ॥ ॥ अशुचौ देशे अशुचावात्मनि च तथा विद्युत्स्तनितसंप्लवे पुनः पुनर्विद्योतमानायां विद्युति
स्तनितसंप्लवे पुनः पुनर्गर्जनेनाकालिकोऽनध्यायः ॥ भुक्त्वार्द्रपाणिर्नाधीयीत ॥ जलम
ध्ये च अर्धरात्रे महानिशारूपमध्यमप्रहरद्वये अतिमारुते अहन्यपि तावत्कालं नाधीयत ॥
पांशुवर्षे दिशां दाहे संध्यानीहारभीतिषु ॥ धावतः पूतिगंधे च शिष्टे च गृहमागते ॥ ओस्याति
के रजोवर्षे दिक्षु दाहे पत्रज्वलितादिवद्दिशां दर्शने संध्यायां नीहारे धूमिकायां भीतिषु चौरस्व
जादिकृतासु तावत्कालमनध्यायः ॥ धावतः त्वरितं गच्छतोऽनध्यायः ॥ पूतिगंधे च कुत्सिते
गंधे च ॥ अमेध्यमद्यादिगंधे ॥ शिष्टे च श्रोत्रियादौ गृहं आसन्ने तदनुज्ञावधिरनध्यायः ॥ ॥

३० खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे॥ सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः॥ या
नेष्वादिदुरणमुखरः मरुद्भूमिनौ॥ एतेष्वकोपणार्धेमेसप्तारात्र्यसप्तत्रिंशदनध्यायास्ता
त्कालिकानिमित्तसमकालान्विदुः॥ इत्यध्ययनविधिज्ञाविदुरित्यनेनस्वसंततरोचकानध्यान
पिसंगृह्णाति॥ यथाहमनुः॥ शयानः प्रौढपादश्च कृत्वाचैवावसक्थिकां॥ नाधीयीतामिषं
जग्ध्वासूतकान्नाद्यमेवच॥ इत्यादि॥ एवमनध्यायानुक्त्वाप्रसंगात्स्नातकव्रतान्याह॥ ॥
देवर्त्विक्स्नातकाचार्यराज्ञांछायांपरस्त्रियाः॥ नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनानि
च॥ ॥ देवानामृत्विक्स्नातकाचार्यराज्ञांपरस्त्रियाश्च छायांनापक्रामेत्॥ नाधितिष्ठेत्
॥ नलंघयेच्चबुद्धिपूर्वकं॥ यथाहमनुः॥ देवतानांगुरोराज्ञः स्नातकाचार्ययोरपि॥ नाक्रा
मेत्कामतः छायांबभ्रुणोदीक्षितस्यच॥ इति॥ बभ्रुणो नकुलवर्णस्य यस्यकस्यचित्तुरो राम
रन्यस्यवासोमादेर्बभ्रुण इतिनपुंसकलिंगनिर्देशात्॥ रक्तादीनिचनाधितिष्ठेत्॥ स्ना
दिग्रहणात्स्नानोदकादेर्ग्रहणं॥ उद्वर्तनमपस्नानंविण्मूत्रेरक्तमेवच॥ श्लेष्मनिष्ठ्यूतवां
तानिनाधितिष्ठेत्तुकामतइति॥ ॥विप्राहिक्षत्रियात्मानोनावज्ञेयाः कदाचन॥ आ
मृत्योः श्रियमाकांक्षेन्नकंचिन्मर्मणिस्पृशेत्॥ विप्रोबहुश्रुतोब्राह्मणः॥ अहिः सर्पः॥
क्षत्रियोनृपतिः॥ एतेकदाचिदपिनावमंतव्याः॥ आत्माचस्वयमेवनावमंतव्यः॥ आमृत्यो
र्यावज्जीवंश्रियमिच्छेत्॥ नकंचिन्मर्माणिस्पृशेत्कस्यचिदपिमर्मदुश्चरितंनप्रकाशये
त्॥ दूरादुच्छिष्टविण्मूत्रेपादांभांसिसमुत्सृजेत्॥ श्रुतिस्मृत्युदितंसम्यगनुतिष्ठेत्॥ गो ३०

३९ त्स्यपक्षा मातुलस्याश्च। मातुलस्य पृथगुपादानं आदरार्थं। ऋत्विक् याजकः। पुरोहितः शांत्यादेः
कर्ता। अपत्यं पुत्रादि। भार्या सहधर्मचारिणी। दासः कर्मकरः। सनाभयः सोदराः। भ्रातृभ्यः पृ
थगुपादाने अजामि भगिनी अस्यार्थं। एतैर्मात्रादिभिः सह वाक्कलहं परित्यज्य सर्वान् प्राजापत्या
दीन् लोकानाप्नोति॥ पंच पिंडाननुद्धृत्य न स्नायात्परवारिषु। स्नायान्नदीदेवखातह्रदप्रस्र
वणेषु च॥ ॥परवारिषु परसंबंधिषु सर्वसलोद्देशेनासंकेषु तडागादिषु पंच पिंडाननुद्धृत्य
न स्नायात्॥ अनेनात्मीयासर्वस्वेष्वनुज्ञातेषु पिंडोद्धरणमंतरेणापि स्नानमभ्यनुज्ञातं॥ नद्यादि
षु कुत्र तर्हि स्यादित्याह॥ स्नायान्नदीदेवखातेति। साक्षात्परंपरया वा समुद्रगाः स्रवंत्यो नद्यः। देव
खातं देवनिर्मितं पुष्करादि। उदकप्रवाहाभिघातजनितः सजलो महानिम्नप्रदेशो ह्रदः। पर्वताद्यु
च्चप्रदेशात्प्रसृतमुदकं प्रस्रवणं। एतेषु पंचपिंडानुद्धरणेन स्नायात्॥ एतच्च नित्यस्नानवि
षयं। सति संभवे नदीषु देवखातेषु तडागेषु सरित्सु च। स्नानं समाचरेन्नित्यं गर्तप्रस्रवणेषु चे राम
ति॥ नित्यग्रहणान्नैमित्तिकाद्यर्थं तु यथासंभवं परवारिषु पिंडानुद्धरणे सर्वस्य कर्मणोऽन निषेधः
॥ ॥परशय्यासनोद्यानगृहयानानि वर्जयेत्॥ अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि॥ ॥
शय्या कशिपुः। आसनं पीठादि। उद्यानमाम्रादिवनं। गृहं प्रसिद्धं। यानं रथादि। परसंबंधीन्येता
नि अदत्तान्यननुज्ञातानि वर्जयेन्नोपयुंजीत॥ अभोज्यान्नाह॥ अग्निहीनस्येति श्रौतस्मार्ताग्न्य
धिकाररहितस्य शूद्रस्य। प्रतिलोमस्य चाधिकारवतोप्यग्निरहितस्यान्नमनापदि न भुंजीत न प्र
तिगृह्णीयाच्च। तस्माद्प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुंजीत प्रतिगृह्णीयाच्चेति गौतम
वचनात्॥ कदर्यबद्धचौराणां क्लीबरंगावतारिणां॥ वेणाभिशस्तवार्धुष्यगणिकागणदीक्षिणां॥॥ ३९

कदर्यो लुब्धः॥ आत्मनं धर्मकार्यं च पुत्रदारांश्च पीडयेत्॥ लोभाद्यः पितरौ भृत्यान्स कदर्य इति
स्मृतः॥ उत्सुकः॥ बद्धो निगडादिना। वाचा संनिरुद्धश्च॥ चौरो ब्राह्मणसुवर्णव्यतिरिक्तपरस्वापह
री॥ क्लीबो नपुंसकः॥ रंगावतारी नटचारणमल्लादिः। वेणुच्छेदजीवी वैणः॥ अभिशस्तः पतनीयैः
कर्मभिरभियुक्तः॥ वार्धुषी निषिद्धवस्तूपजीवी। गणिका पण्यस्त्री। गणदीक्षी बहुयाजकः
॥ एतेषामन्नं नाश्नीयात्॥ इत्यनुवर्तते॥ ॥ चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषां। क्रूरो
ग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनां॥ ॥ चिकित्सको भिषग्वस्तूपजीवी॥ आतुरो महारो
गोपसृष्टः॥ वातव्याध्यश्मरीकुष्ठमेहोदरभगंदराः॥ अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्र
कीर्तिता इति। क्रुद्धः कुपितः। पुंश्चली व्यभिचारिणी। मत्तो विद्यादिना गर्वितः। विद्विट् शत्रुः
॥ क्रूरो दुराराध्यो नरकोपः॥ उग्रो वाक्कायव्यापारेणोद्वेजकः। पतितो ब्रह्महादिः। व्रात्यः
पतितसावित्रीकः। दाम्भिको वंचकः। उच्छिष्टभोजी परभुक्तोच्छिष्टाशी॥ एतेषां चिकित्स
कादीनामन्नं नाश्नीयात्॥ अवीरा स्त्री स्वर्णकारस्त्रीजितग्रामयाजिनां। शस्त्रविक्र
यकर्मारतन्तुवायश्ववृत्तिनां॥ अवीरा स्त्री स्वतंत्रा व्यभिचारमंतरेण। पतिपुत्ररहिते
त्यन्ये। स्वर्णकारः सुवर्णस्य विकारान्तरकर्त्ता। स्त्रीजितः सर्वत्र स्त्रीवशवर्ती। ग्रामयाजी
ग्रामस्य शान्त्यादिककर्त्ता॥ बहूनां वा उपनेता। शस्त्रविक्रयी॥ शस्त्रविक्रयोपजीवी॥ क
र्मारो लोहकारः तक्षादिश्च। तन्तुवायः सूचीशिल्पोपजीवी। श्वभिर्वृत्तिर्जीवनं यस्यासौ
श्ववृत्ती॥ एतेषामन्नं नाश्नीयात्॥ ॥ नृशंसराजरजककृतघ्नवधजीविनां। पिशुनानृ

३२ तिनोश्चैव तथा चाक्रिकवंदिनां ॥ एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ॥ नरेंद्रः सो निर्दि
ष्टः राजा भूपतिः । तत्साहचर्यात्पुरोहितश्च । तथाह शंखः । भीतावगीतारुदिताक्रंदिता
वघुष्टक्षुधितपरिभुक्तविस्मितोन्मभावधूतराजपुरोहितान्नानि वर्जयेदिति रजको वस्त्रा
दीनां नील्यादिरागकरः । हन्तघ्न उपघ्नन्तस्य हंता । वनजीवी प्राणिनां वधेन वर्त्तते । चैल
धावो वस्त्रनिर्णेजनकृत् ॥ सुराजीवी मद्यविक्रयी उपपतिर्जारः । सहोपपतिना यस्य
स्या सौ सहोपपतिर्वेश्मनि । पिशुनः परदोषस्य ख्यापकः ॥ अनृती मिथ्यावादी । चाक्रि
कस्तैलिकः शाकटिकश्च । अभिशस्तपतितः चाक्रिकतैलिकवृत्तिभेदेनाभिधानात्
। वंदिनः स्तावकाः सोमविक्रयी सोमलतायाविक्रेता ॥ एषामन्नं न भोक्तव्यं । सर्वे चैते
कदर्यादयो द्विजा एव । कदर्यत्वादिदोषदुष्टा अभोज्यान्नाः । इतरेषां प्राप्त्यभावात्प्रा राम
सिपूर्वकत्वाच्च प्रतिषेधस्य ॥ अग्निहीनस्य नान्नमद्यादनापदीत्यत्र शूद्रस्य अभोज्या
न्नत्वमुक्तं तत्र प्रतिप्रसवार्थमाह ॥ ॥ शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः ॥ भो
ज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥ शूद्रेषु दासगोपादासो गर्भदासादयः
गोपालो गवां पालनेन यो जीवति । कुलमित्रं पितृपितामहादिक्रमायातं । अर्धसीरी ह
लपर्यायः सीरफलस्तितरूपिफलग्राही ॥ नापितो गृहव्यापारकारयिता क्षौरकर्त्ता
चयश्च वाङ्मनःकायकर्मभिरात्मानं निवेदयति तवाहमिति । एते दासादयः शूद्रा
णां मध्ये भोज्यान्नाः । चकारात्कुंभकारश्च । गोपानापितदासकुंभकारकुलमित्रा ३२

द्विकनिवेदितान्नानां भोज्यान्नाइत्निवचनात्॥ ॥इति स्नातकव्रतप्रकरणं॥ ॥नस्वाध्याय-
विरोध्यर्थानीहेत॥ आरभ्यत्राऽऽलम्भ्यस्नातकेव्रतमभिधायेदानीं द्विजातिधर्मानाह॥ ॥अन
र्चितं वृथामांसं केशकीटसमन्वितं॥ शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं चैकपतितेक्षितं॥ उद
क्यास्पृष्टं संघुष्टं पर्यायान्नं च वर्जयेत्॥ गोघ्रातं शकुनोच्छिष्टं पदा स्पृष्टं च कामतः॥ ॥
अनर्चितं अवज्ञया दीयते। वृथामांसं वक्ष्यमाणप्राणसंशयादिव्यतिरेकेण दे
वार्थं न शिष्टं च यन्न भवति आत्मार्थमेव पाचितं॥ केशकीटादिमिश्रं संयुक्तं। यत्स्व
यमनम्लं केवलं कालपरिवासेन द्रव्यान्तरसंसर्गकालपरिवासाभ्यां वा अम्लीभवति
शुक्तं दध्यादिव्यतिरेकेण। नपापीयसोऽन्नमश्नीयान्नद्विः पक्वं न शुक्तं न पर्युषितमन्य
मन्नं रात्र्यन्तरितं गुडगोधूमयवपिष्टविकारेभ्य इति शंखस्मरणात्। पर्युषितं रात्र्यन्तरितं
भुक्तोच्छिष्टं तमुच्छिष्टं श्वस्पृष्टं शुनास्पृष्टं। पतितेक्षितं पतितादिभिरीक्षितं। उदक्या
रजस्वला तया स्पृष्टं उदक्याग्रहणं चण्डालाद्युपलक्षणार्थं। अत एवापस्तम्बचण्डालवेश्या
विहारकच्छाण्डालविशेषरजस्वलाकुनखिकुष्ठिसंस्पृष्टान्नं वर्जयेदिति शंखस्मरणा
त्। कोऽभुंक्त इति उद्घोष्य दीयते तत्संघुष्टान्नं। अन्यसंबन्धि अन्यपर्यायेन यद्दीयते तत्पर्याया
न्नं। यथा॥ ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत्। उभावेतावभोज्यान्नौ भुक्त्वा
चान्द्रायणं चरेदिति। पर्यायाचान्तमिति पाठे परिगतेनाचान्तेन गंडूषग्रहणं यस्मिंस्तत्पर्यायाचा
न्तं तन्न भोक्तव्यं। एतदुक्तं भवति गंडूषग्रहणादूर्ध्वं आचमनात्प्राक् न भोक्तव्यं। पार्श्वाचा

३३ तयितिपाठे एकस्यां पंक्तौ पात्रस्थस्य आचांतेन भोक्तव्यं मिश्रोदकादिविछेदेन विना वर्जये
दिति प्रत्येकं संबध्यते तथा॥ गोघ्रातं॥ गवाघ्रातं॥ शकुनेन काकादिना अवस्वादितं शकु
नोच्छिष्टं। पदास्पृष्टं बुद्धिपूर्वपादेन स्पृष्टं वर्जयेत्॥ पर्युषितस्य प्रतिप्रसवमाह॥ ॥
अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितं॥ अस्नेहा अपि गोधूमयवगोरसविक्रियाः॥
अन्नमदनीयं पर्युषितमपि घृतादिस्नेहसंयुक्तं चिरकालसंस्थितमपि भोज्यं॥ गोधू
मयवगोरसविक्रिया मंडकसक्तुकिखोवेतिभाषा लाटकूर्चिकाद्या अस्नेहा अपि चि
रसंस्थिता भोज्याः। यदि विकारांतरमनापन्नाः॥ अपूपधानाकरंभसक्तुयावकतै
लपायसशाकानि शुक्तानि वर्जयेदिति वशिष्ठस्मरणात्॥ ॥संधिन्यनिर्दशावत्स रम
सागोपयः परिवर्जयेत्॥ औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकं॥ ॥संधिनी या
वृषेण संधीयते॥ वशा वंध्या विजानीयात् वृषाक्रांता च संधिनीमिति त्रिकांडीस्मरणात्
या चैकां वेलामतिक्रम्य दुह्यते या च वत्सांतरेण संधीयते सा संधिनी॥ प्रसूता अनति
क्रांतदशाहा अनिर्दशा मृतवत्सा अवत्सा संधिनी च अनिर्दशा च अवत्सा च संधिन्य
निर्दशावत्सा ताश्च ता गावश्च तासां पयः क्षीरं परिवर्जयेत्। संधिनी मां चैवेति॥ सर्व
ग्रहणे स्यंदिनीयमसूवीरूपलक्षणार्थं। यथाह गौतमः॥ स्यंदिनीयमसूसंधिनीनां
चेति॥ सवत्सपयस्तनी स्यंदिनी॥ यमसूर्यमलप्रसविनी॥ एवमजामहिष्यादेरनिर्दशायाः

३५ छद्मानुकारी॥सारसो लक्ष्मणः॥एकशफा अश्वादयः हंसाः प्रसिद्धाः॥ग्रामवासिनः पारा
वतप्रभृतयः॥एतान्क्रव्यादीन्वर्जयेत्॥ ॥कोयष्टि[illegible]प्लवचक्राह्वबलाकाबककवि
विष्किरान्॥वृथाकृसरसंयावपायसापूपशष्कुलीः॥ ॥कोयष्टिः क्रौञ्चः॥प्लवो जलकु
कुटः॥चक्राह्वश्चक्रवाकः बलाकाबकौ प्रसिद्धौ नखैर्विदार्य निकीर्य भक्षयन्तीति विष्किरा
श्चकोरादय एव गृह्यन्ते॥लावकमयूरादीनां भक्ष्यत्वे ग्रामकुक्कुटस्य ग्रामवासित्वादेव नि
षेधः॥एतान्कोयष्ट्यादीन्वर्जयेत्॥वृथा देवताद्युद्देशमन्तरेण साधिताः कृसरसंया
वपायसापूपशष्कुलीर्वर्जयेत्॥कृसरस्तिलमुद्गसिद्धौदनः॥संयावः क्षीरगुडघृतादि
कृतउत्कारिकाख्यः॥पायसं पयसा सिद्धमन्नं॥अपूपः घृतस्नेहपक्वो गोधूमविकारः स्नेह
पक्वो गोधूमविकारः शष्कुलीः नपचेदन्नमात्मने इति लिङ्गसरारादीनां निषेधसिद्धे पुन शम
रभिधानं प्रायश्चित्तगौरवार्थं॥ ॥कलविङ्कसकाकोलकुररज्जुदालकान्॥जालपा
दान्खञ्जरीटानज्ञातांश्च मृगद्विजान्॥ ॥कलविङ्को ग्रामचटकः॥ग्रामनिवासित्वे
न प्रतिषेधे सत्यप्यवरत्वात्पुनर्वचनं॥काकोलो द्रोणकाकः॥कुररः उत्क्रोशः॥रज्जुदालो
वृक्षकुट्टकः॥जालपादा जालाकारपादाः॥अजालपादा अपि हंसाः सन्तीति हंसानां
पृथग्वचनं॥खञ्जरीटाः खञ्जनाः॥जातितोऽप्यज्ञाता मृगाः पक्षिणश्च एतान्कल
विङ्कादीन्वर्जयेत्॥ ॥चाषाः किकिदीवयः॥रक्तपादाः कादम्बप्रभृतयः॥सौनं घा

तनस्थानभवेमांसोनस्याएगमपि। वल्लूरंशुष्कमांसं॥ मत्स्यामीनाः॥ एतांश्चाश्चादीन्वर्ज
येत्॥ वकारात्नालिकाद्याएणछत्राककुसुंभादीन्॥ नालिकाद्याएणछत्राककुसुंभालाबु
विडूनान्॥ कुंभीकिंशुकवृंताककोविदाराश्चवर्जयेत्॥ तथाअकालप्रसूतानिपुष्पा
णिचफलानिचफलानिच॥ विकारनत्रयकेविनश्यस्तेनवर्जयेत्॥ तथावटप्लक्षा
श्वत्थदधित्थनीपमातुलिंगफलानिवर्जयेत्॥ इत्यादिस्मरणात्॥ एतत्संधिनीक्षीर
प्रभृतीननुक्तान्कामतोभक्षयित्वात्रिरात्रमुपवसेत्॥ अकामतस्त्वहोरात्रंशेषेषू
पवसेदहोरात्रमितिमनुस्मरणात्॥ पशुनः शंखेनोक्तं॥ बकबलाकाहंससवचक्रवा
ककारंडवप्लवगृहचटककपोतपारावतपलांडुशुकसारिकासारसटिट्टिभोलूकक
रक्तपादश्वापभासवायसकोकिलशार्ङ्गलिकुक्कुटहारीतभक्षणेद्वादशरात्रमनाहा
रःपिबेद्गोमूत्रयावकं इतिवृद्धकालाभ्यासमतिपूर्वंसमस्तभक्षणेवारवादिन
यणं॥ ॥पलांडुर्विड्वराहश्चछत्राकंग्रामकुक्कुटं॥ लसुनंगृंजनंचैवभुक्त्वाचांद्रा
यणंचरेत्॥ पलांडुःस्थूलकंदनालोलसुनानुकारी॥ विड्वराहोग्रामसूकरः॥ छ
त्राकंसर्पछत्रं॥ ग्रामकुक्कुटः प्रसिद्धः॥ लसुनंरसोनंसूक्ष्मकंदंश्वेतकंदनालं॥ ॥
गृंजनंलसुनानुकारिलोहितसूक्ष्मकंदं॥ एतानिषट्सकृत्कामतोजग्ध्वाभ

३५ छायिद्याचांद्रायणं वा । ईस्माराल्लसुणं चरेत् । ग्रामकुक्कुटछत्राकयोः । पूर्वं प्रतिषिद्धयोरिहाभिधा
नं पलांडुवादिसमानप्रायश्चित्तार्थं । मतिपूर्वे निरंतराभ्यासेषु ॥ छत्राकं विड्वराहं च लसुनं ग्रा
मकुक्कुटं ॥ पलांडुं गृंजनं चैव मत्या जग्ध्वा पतेद्द्विज इति मनूक्तेः ॥ अमतिपूर्वाभ्यासे । अमत्यैता
नि षड् जग्ध्वा कृच्छ्रं सांतपनं चरेत् ॥ यतिचांद्रायणं वापीति द्रष्टव्यं ॥ अमतिपूर्वाभ्यासे तु गृं
खोल्कोलेसुनपलांडुगृंजनविड्वराहग्रामकुक्कुटकुक्कुटेसी भक्षणे द्वादशरात्रं पयः पिबेदिति ॥
॥ भक्ष्याः पंचनखाः सेधागोधाकच्छपशल्लकाः । गंधर्वः शावर एणः समरो गवयः शशाः । शशश्च
श्च मत्स्येष्वपि हि सिंहतुंडकरोहिताः ॥ तथा पाठीनराजीवसशल्काश्च द्विजातिभिः ॥ ॥
सेधा श्वावित् । गोधा कृकलासानुकारिणी महती । कच्छपः कूर्मः । शल्ली । शशकः प्रसिद्धः ॥
पंचनखादीनां श्वमार्जारवानरादीनां मध्ये एते सेधादयो भक्ष्याः । चकारात् खड्गकेरुकं राम
खड्गिनोऽपि । यथाह गौतमः ॥ पंचनखाश्च शशशल्लकश्वाविच्छल्लकस्तको मिशलली
शललं शल्लं वित्तगोधाखड्गकच्छपा इति ॥ तथा मनुरपि । श्वाविधं शल्लकं गोधां खड्गकूर्मशशां
स्तथा । भक्ष्यान्पंचनखेष्वाहुरनुष्ट्रांश्चैकतोदतः इति । यस्तु नयसिद्धे नखेतु विवर्जितस्य
भक्ष्यत्वमुक्तं न तत् श्राद्धादन्यत्र । खड्गमांसे भवेद्दत्तमनंतं पितृकर्मणीति ॥ श्राद्धफलश्रुति
दर्शनात् ॥ तथा मत्स्यानां मध्ये सिंहतुंडादयो भक्ष्याः । सिंहतुंडः सिंहमुखः । रोहितो लोहि
तवर्णः ॥ पाठीनः सहस्रदंष्ट्रः । राजीवः पद्मवर्णः ॥ सहशल्कैः शुक्लाकारैर्वर्तत इति सशं

३६ शिष्टस्याप्यनुज्ञामात्रं न प्रोक्षितादिवन्नियम इति दर्शितं ॥ एवमप्रतिषिद्धानामपि शशादीनां प्रा
णात्ययादिव्यतिरेकेणाभक्ष्यत्वावगमात् शूद्रस्यापि मांसप्रतिबद्धसर्वविधिनिषेधाधि
कारो गम्यते ॥ ॥इदानीं प्रोक्षितादिव्यतिरिक्तस्य वृथामांसाभिसंधिनेन प्रतिषिद्धस्य भक्षणे
निन्दार्थवादमाह ॥ ॥वसेत्स नरके घोरे दिनानि पशुरोमभिः ॥ संमितानि दुराचारो यो हन्त्य
विधिना पशून् ॥ ॥अविधिना देवताद्युद्देशमन्तरेण यः पशून्हन्ति स तस्य पशो यावन्ति रो
माणि ता~~हंता क्रयी ॥ संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातका इति~~ वंति दिनानि
घोरे नरके वसेच्च ॥ हन्ता च षड्विधो घातकः ॥ यथाह मनुः ॥ अनुमन्ता विशसिता नि
हन्ता क्रयविक्रयी ॥ संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातका इति ॥ इदानीं वर्जने वि राम
धिमाह ॥ ॥सर्वान्कामानवाप्नोति हयमेधफलं तथा ॥ गृहेपि निवसन्विप्रो मुनिर्मां
सविवर्जनात् ॥ ॥यः प्रोक्षितादिव्यतिरेकेण मांसं न भक्षयितव्यमिति संसंक
ल्पो भवति स सर्वान्कामांस्तत्साधने प्रवृत्तो निर्विघ्नं प्राप्नोति ॥ विघ्नदोषाभावात् ॥ य
थाह मनुः ॥ यद्ध्यायति यत्कुरुते रतिं बध्नाति यत्र च ॥ तदवाप्नोत्ययत्नेन यो हिनस्ति न
किंचनेति ॥ एतच्चानुषंगिकं फलं ॥ मुख्यफलमाह हयमेधफलं तथेति ॥ एतच्च सांवत्सरीक
संकल्पस्य ॥ वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः ॥ मांसानि च न खादेद्यस्तयोः पुण्य
फलं सममिति मनुस्मरणात् ॥ तथा गृहेपि निवसन्वानप्रस्थादिस्त्रातुर्वीलिको मुनिवन्मां

ननीयोभवतिमांसस्सागात्। एतच्चनप्रतिषिद्धमांसविषयेनापिप्रोक्षितादिविषये। पारि
शेष्यादतिथ्याद्यर्थेनशिष्टाभ्यनुज्ञातविषयमिति॥ इतिभक्ष्याभक्ष्यप्रकरणं॥ इदानींद्रव्य
शुद्धिमाह॥ ॥सौवर्णराजताब्जानामूर्ध्वपात्रग्रहाश्मनां॥ शाकरज्जुमूलफलवासोविद
लचर्मणां॥ पात्राणांचमसानांचवारिणाशुद्धिरिष्यते॥ ॥सौवर्णंसुवर्णकृतंराजतंरू
प्यकृतं॥ अब्जंमुक्ताफलशंखशुक्त्यादि। ऊर्ध्वपात्रंयज्ञियोलूखलादि। ग्रहादिसाहचर्या
त्। ग्रहाःषोडशिप्रभृतयः॥ अश्मानोदृषदादि। शाकंवास्तूकादि। रज्जुर्बल्वजादिनिर्मिता। मूला
मार्द्रकादि। फलमाम्रादि। वासोवस्त्रं। विदलंवेणवादि। चर्मअजादीनां। विदलचर्मणोर्द्वन्द्व
णंतद्विकाराणांछत्रवरत्रादीनामुपलक्षणार्थं। पात्राणिप्रोक्षणीपात्रप्रभृतीनि। चमसा
होतृचमसादयः। एतेषांसौवर्णादीनांलेपरहितानामुच्छिष्टस्पर्शमात्रेवारिणाप्रक्षालनेनशु
शुद्धिः॥ ॥चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेनवारिणा॥ ॥चरुःचरुस्थाली। स्रुक्स्रुवौ
प्रसिद्धौ। सस्नेहपात्राणिप्राशित्रहरणादीनि। एतानिचलेपरहितानिउष्णेनवारिणाशुध्य
न्ति॥ ॥निर्लेपंकांचनंभांडमद्भिरेवविशुध्यति॥ अब्जमश्ममयंचैवराजतंचानुपस्कृत
मितिमनुस्मरणात्॥ अनुपस्कृतंअखातपूरितं। सलेपानांतुतैजसानांमलिनानांचस
र्वस्याश्ममयस्यच॥ भस्मनाद्भिर्मृदाचैवशुद्धिरुक्तामनीषिभिरितिमनूक्तंद्रष्टव्यं॥ ॥स्फ्य

३७ स्थानोरेककार्यत्वादिकस्य ॥ आपस्तम्बः समुच्चीयते । काकादिमुखोपघाते तु स्वानकुनिमुखा
वमृष्टपात्रं निर्लिखेत् । श्वापदमुखावमृष्टपात्रं न प्रयुञ्जीतेति द्रष्टव्यं । एतच्च मार्जारादन्यत्र
। मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिरिति मनुस्मरणात् ॥ ॥ स्फ्यशूर्पाजिनधान्यानां
मुशलोलूखलानसां ॥ स्फ्यानत्रीयज्ञांग ॥ अनः शकटं । शेषं प्रसिद्धं ॥ एतेषामु नवारिणा
शुद्धिः ॥ पुनरजिनग्रहणं यज्ञांगाजिनप्राप्त्यर्थं ॥ ॥ प्रोक्षणं संहतानां च बहूनां धान्यवाससां
॥ संहतानामुक्तशुद्धिः स्यात् । अयावयविनां बहूनां वाससां वासोग्रहणमुक्तशुद्धीनामुप
लक्षणार्थं । उक्तशुद्धीनां धान्यवाससः प्रभृतीनां बहूनां राशिकृतां प्रोक्षणेनैव शुद्धिः ॥ बहुत्वं च
स्पृष्टापेक्षया एतदुक्तं भवति । यदा धान्यानि वस्त्रादीनि वा राशीकृतानि तत्र चांडालादिस्पृ राम
ष्टान्यल्पानि बहूनि च अस्पृष्टानि स्पृष्टानामुक्तैव शुद्धिः । इतरेषां प्रोक्षणमिति । तथा
च स्मृत्यंतरे । वस्त्रधान्यादिराशीनामेकदेशस्य दूषणे ॥ तावन्मात्रं समुद्धृत्य शेषं प्रोक्षण
मर्हतीति । यदा पुनः स्पृष्टानां बहुत्वमस्पृष्टानां चाल्पत्वमिति । तदा सर्वेषामेव क्षालनं । य
थाह मनुः ॥ अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससां ॥ प्रक्षालनेन त्वल्पानामद्भिः शौ
चं विधीयते ॥ इति स्पृष्टानामस्पृष्टानां च समत्वेऽपि प्रोक्षणमेव बहूनां प्रोक्षणविधाने
नाल्पानां क्षालने सिद्धे पुनरल्पानां क्षालनवचनस्य समेषु क्षालननिवृत्त्यर्थत्वात् ।

इयत्स्पृष्टमियदस्पृष्टमित्यविवेकेतु क्षालनमेव। पाक्षिकस्यापि दोषस्य परिहर्त्तव्यत्वा
त्। अनेकपुरुषोद्धार्याणांतु धान्यवासः प्रभृतीनांस्पृष्टानामस्पृष्टानांचप्रोक्षणमेव
तिनिर्बंधः कृतः। निर्लेपानां स्पर्शमात्रदुष्टानां शुद्धिमुक्त्वेदानीं सलेपानां शुद्धिमाह॥ ॥
तक्षणं दारुशृंगास्थ्नां गोवालैः फलसंभुवां॥ मार्जनं यज्ञपात्राणां पाणिनायज्ञकर्मणि॥ दा
रूणां। मेषमहिषादिशृंगाणां। करिवराहाद्यस्थ्नां॥ अस्थिग्रहणेन दन्तानामपि ग्रहणं। उ
च्छिष्टस्नेहादिलिप्सानां मध्ये स्नेहादेकादिभिः अनपगतलेपानां। यावन्मात्रे समेध्याक्तो
हंधोलेपश्चतत्स्वेतः। तावन्मात्रस्यादपसर्वासु द्रव्यशुद्धिषु स्थिति। समान्यशुद्धिविधा
नात्। तक्षणं तावन्मात्रद्रव्यावयवापनयनं शुद्धिः। फलसंभुवां बिल्वालाबुनालि
केरादिफलसंभूतानां पात्राणां गोवालैरुद्घर्षणं शुद्धिः। यज्ञपात्राणां स्रुक्स्रुवादीनां य
ज्ञकर्मणि प्रयुज्यमानानां दक्षिणेन हस्तेन दर्भैर्दशापवित्रेण वाययाशास्त्रं कर्मांगत्व-
या मार्जनं कर्त्तव्यं॥ एतच्च श्रोत्रमुदाहरणं। अन्येषामपि सुवर्णादीनां पात्राणां स्मार्त्त
लौकिककर्मसु च तच्छौचनामवांगत्वमिति द्रष्टव्यं। यज्ञांगानां पुनः तच्छौचानामे
दर्शापवित्रादिभिर्मार्जनं संस्कारार्थमिति विशेषः॥ ॥इदानीं सलेपानामेव काष्ठा-
चित्तपापकर्षणहेतुनाह॥ ॥सोषैरुदकगोमूत्रैः शुध्यत्याविककौशिकं॥ सश्रीफ
लैरंशुपट्टं सारिष्टैः कुतपं तथा॥ ॥उषरमृत्तिकासहितेन गोमूत्रेणोदकेन वालेपाप

३८ स्य॥ आविकं ऊर्णामयं। कौशिकं कोशप्रभवं पट्टसूत्रपट्टादि क्षालितं शुध्यति। उदक
गोमूत्रैरिति वक्ष्यमाणेन पश्चादप्युदकप्राप्त्यर्थं। अंशुपट्टं वल्कलं तन्तुसन्ततं। सश्रीफलै
बिल्वफलसहितैः। कुतपं पर्वतीयच्छागरोमनिर्मितं कम्बलः। अरिष्टफलसहितैः
फेनकसहितैरुदकगोमूत्रैः शुध्यतीत्यनुवर्तते। एतच्चोच्छिष्टस्नेहादियोगे सति वेदि
तव्यं अल्पोपघाते तु प्रोक्षणादि क्षालनासहत्वात्। सर्वत्र द्रव्यविनाशिनैव शुद्धिरिष्ट
त्वात्। तथा च देवलः। ऊर्णकौशेयकुतपपट्टक्षौमदुकूलकाः। अल्पशौचा भवन्त्येते शोषण
प्रोक्षणादिभिरित्यभिधायाह। तान्येवामेध्ययुक्तानि क्षाल्यानि शोधनैः स्वकैः। धान्य
पि३८ कल्कैस्तरुफलजै रसैः क्षारानुगैरपि। क्षौमवद्वल्कलानां च समानयोनित्वात्॥ ऊर्णा राम
दिग्रहणं तदारब्धतूलिकादिप्राप्त्यर्थं॥ अनन्तस्यात्पोपघाते नैव क्षालनं कर्तव्यं।
अमेध्यलेपादन्यत्र तूलिकाद्युपधानं च पुष्परक्ताम्बरं तथा॥ शोषयित्वातपे किंचित्क
रैर्निर्माजयेन्मुहुः॥ पश्चात्तु वारिणा प्रोक्ष्य विनियुञ्जीत कर्मणि॥ तान्यपि तु मलिष्टा
नि यथास्वं परिशोधयेदिति देवलस्मरणात्। पुष्परक्तग्रहणं कुङ्कुमकुसुम्भादिरक्तानि
। पुष्परक्तग्रहणमन्यस्यापि हरिद्रादिरक्तस्य क्षालनासहस्यप्राप्त्यर्थं। तथा जिह्वाद
स्तस्य क्षालनसहत्वात्। शंखेनाप्युक्तं। रागद्रव्याणि प्रोक्षितानि शुचीनीति॥ ॥
सगौरसर्षपैः क्षौमं पुनः पक्वान्महीमयं॥ गौरसर्षपसहितैरुदकगोमूत्रैः क्षौमं। ३८

शुनाघ्रातस्तथा। न स्पृशेन्मेध्यमिति पुनः पाकेन मृन्मयं घटादि। एतच्चोच्छिष्टस्नेहालेप-
वेदितव्यम्। तथा मूत्रपुरीषश्लेष्मपूयाशृक्शोणितैः। संस्पृष्टं नैव शुद्ध्येत पुनः पाकेन मृन्मय-
म्॥ चण्डालाद्युपहतं तु त्याग एव॥ यथाह पराशरः। चण्डालैर्यत्स्पृष्टं भाण्डं वस्त्र-
मप्यपि वा॥ प्रक्षालनेन शुध्यन्ति परित्यागान्महीमयमिति॥ कारुहस्तः शुचिः प-
ण्यं भैक्ष्यं योषिन्मुखं तथा॥ ॥कारवो रजककैवर्तधावकसूपकाराद्यास्तेषां हस्तः शु-
चिः शुचि [illegible] त्वं च तस्मात्प्रेक्षमाणेन स्वधावनादिसूतकादिसंभवे-
पि। तथा च स्मृत्यन्तरे। कारवः शिल्पिनो वैद्या दासीदासास्तथैव च॥ राजानो राजभृ-
त्याश्च सद्यः शौचाः प्रकीर्तिताः इति। परार्थं परार्थं यत् विक्रेयं पण्यं व्रीह्यादि। अनेकक्रे-
जनकरपरिघट्टितमप्यप्रयत्नेन भवति। सूतकादिनिमित्ते च वणिजो। भिक्षणीसमूहो
भैक्ष्यं। तद्गृहस्थचर्यादिगतं अप्रनाचान्तस्त्रीप्रदानादिशुचि। रथ्याकर्दमणादिनापि न
दुष्यति। तथा योषिन्मुखं संभोगकाले शुचि। स्त्रियश्च रतिसंसर्गे इति स्मरणात्॥
॥इदानीं भूशुद्धिमाह॥ ॥भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा॥ सेकादुल्लेख-
नाल्लेपाद्गृहं मार्जनलेपनात्॥ ॥मार्जन्यादिना पांसुतृणादीनां सम्यक्सारणं मार्जनं। दाह-
स्तृणकाष्ठादिकाले यावता कालेन लेपादिक्षयो भवति तावान्। गोक्रमणं गवां पा-
दपरिघट्टनं। सेकः गोमूत्रगोमयवारिभिः प्रवर्षणं। उल्लेखनं तक्षणं खननं वा। ले-
पो गोमयादिभिः। एतैर्मार्जनादिभिः समस्तैर्व्यस्तैर्वा अमेध्याद्युपहतमलिना च भूमिः शु-

३९ ध्यति॥ तथाच देवलः॥ यत्र प्रसूयते नारी म्रियते दह्यते पि वा॥ चंडालाध्युषितं यत्र य
त्र विष्टादिसंगतिः॥ एवं कश्मलभूयिष्टा भूरमेध्या प्रकीर्तिता॥ श्वसूकरखरोष्ट्रा
दिसंस्पृष्टा दुष्यते क्षितिः॥ अंगारतुषकेशास्थिभस्माद्यैर्मलिना भवेत्॥ इत्यमेध्या
दुष्टा मलिनेति त्रिधा भूमिं विभज्य शुद्धिविभागं दर्शयति। पंचधा च चतुर्धा
च भूरमेध्या विशुध्यति दुष्टा द्विधा त्रिधा वापि शुध्यते मलिनैकधा इति। यत्र मनुष्या
दि दह्यते यत्र चंडालैरध्युषितं तस्याः पंचभिर्दहनकालेगोक्रमणसेकोल्लेखनैः
शुद्धिः॥ यत्र मनुष्या जायंते म्रियंते च यत्र चासंतत विष्टादिसंगतिः॥ तस्या दहन
हितैस्तैरेव चतुर्भिः॥ श्वसूकरखरैश्चिरकालमध्युषिताया गोक्रमणसेकोल्लेख
नैस्त्रिभिः॥ उष्ट्रग्रामकुक्कुटादिभिश्चिरकालमधिष्ठिताया सेकोल्लेखनाभ्यां शु राम
द्धिः॥ अंगारतुषादिभिश्चिरकालमधिवासिताया उल्लेखनाच्छुद्धिः॥ मार्जनानुले
पने तु सर्वत्र समुच्चीयेते। एवं गृहं मार्जनलेपनाभ्यां शुध्यति। गृहस्य च यथोपयोगं तु
संमार्जनलेपनयोः प्रतिदिवसं प्राप्त्यर्थं॥ ॥ गोघ्राते न्ने तथा केशमक्षिकाकीटदूषि
ते। सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये॥ ॥ गोघ्राणे निष्प्रभसोपहते न्ने
अदनीयमात्रे॥ तथा मक्षिकाकेशकीटदूषिते। केशग्रहणं लोमादिप्राप्त्यर्थं।
कीटाः पिपीलिकादयः॥ सलिलं भस्म मृद्वापि उदके भस्म मृद्वा यथासंभवं प्रक्षेप्तव्य ३९

४० श्लेष्माद्यस्यातिप्रसरणं यावन्निःसरणंशुद्धिरित्यनुवर्तते। ततोऽल्पस्यत्यागः॥ बहुत्वस्यचदेश
कालापेक्षयावेदितव्यं। यथाहबौधायनः॥ देशंकालंतथात्मानंद्रव्यंद्रव्यप्रयोजनं। उपपत्तिम
वस्थांचज्ञात्वाशौचंप्रकल्पयेत्। कीटाद्युपहतस्यतुसेचनं॥ यथाहमनुः॥ द्रवाणांचैव
सर्वेषांशुद्धिरुत्प्लवनंस्मृतं। उत्प्लवनंचात्रवस्त्रान्तरितपात्रक्षेपः। अन्यथाकीटाद्युपग
मासंभवात्। शूद्रोच्छिष्टस्यतुमधूदकादेःपात्रान्तरानयनाच्छुद्धिः। मधूदकेपयोविका
रांश्चपात्रात्पात्रान्तरानयनेशुद्धाइतिबौधायनः। मधुघृतादेर्वर्तीपसदहस्ताख्यस्य
पात्रान्तरानयनेपुनःपवनंचकार्यं। यथाहशंखः। अध्यवहार्याणांचतेनाग्निधारिता
नांसर्वेषांशुद्धिरुत्प्लवनम्। उपघातशुद्धिमुक्त्वेदानींतेषामेवामेध्योपहतानांशुद्धिमाह॥ राम
॥अमेध्याक्तस्यमृत्तोयैःशुद्धिर्गन्धादिकर्षणात्॥ ॥अमेध्याःशरीरजामलावसा
शुक्रादयः। वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविड्नखाः। श्लेष्माश्रुदूषिकास्वेदोद्वाद
शैतेनृणांमलाः॥ तथा मानुषास्थिशावविष्टारेतोमूत्रार्तववसा। स्वेदाश्रुदूषिका
श्लेष्ममद्यंचामेध्यमुच्यते। इतिमनुदेवलादिप्रतिपादिताः। तैर्वसादिभिरक्तंलिप्तममेध्या
क्तंतस्यमृत्तोयेनशुद्धिःकार्या। गन्धापकर्षणेन। आदिग्रहणाल्लेपस्यापिग्रहणं। यथा
हगौतमः। लेपगन्धापकर्षणेशौचममेध्यलिप्तस्येति सर्वशुद्धिषुचप्रथमंमृत्तोयैरेवल

४०

पगंधापकर्षलेपकार्यं। अशक्तावन्येनतद्भिः। पूर्वेमद्यादिचेतिगौतमवचनात्। वसादिग्रहणं
चसर्वेषाममेध्यत्वप्रतिपादयितुं समानोपयोगाय। मज्जामूत्रपुरीषश्लेष्मपूयाश्रुशोणि
तैः। संस्पृष्टं नैव शुध्येत्पुनः पाकेन मृन्मयमिति सुपघात विशेषाभिधानात्। अमेध्यत्वं चे
षां देहाच्चैव मलाश्च्युताः इति वचनाद्देहच्युतानामेव न स्वस्थानावस्थितानां। पुरुषस्य ना
भेरूर्ध्वं करस्पृष्टिरिंद्रियाणामन्यामेध्यस्पर्शे स्नानं। यथाह देवलः। मानुषास्थि वसां वि
ष्ठामार्तवं मूत्ररेतसी। मज्जानं शोणितं स्पृष्ट्वा परस्य स्नानमाचरेत्। तान्येव स्वानि सं
स्पृश्य प्रक्षाल्याचम्य शुध्यतीति।। ।। दारुकरास्तमंबुनिर्णिक्तमज्ञातं च सदा शुचि
।। हस्तेपि पद्याक्तशौचे मनसोपरितोषाय तत्र शुद्धिसंदेहो भवति न दारुकरास्तं शुद्धमेतद्
स्त्विति। ब्राह्मणवचनेन शुद्धं भवतीत्यर्थः। अंबुनिर्णिक्तं यस्य प्रतिपदेकैक शुद्धिर्नो स्वि
तस्य प्रक्षालनेन शुद्धिः। प्रक्षालनासहस्य प्रोक्षणेन। अज्ञातं च। सदाय क्रीतादिकमुपह
तमुपयुक्तेन कदाचिदपि ज्ञायते तेन शुचि। न उपभोगाद्दृष्टदोषो नास्तीत्यर्थः। मन्वेतदि
रुद्धं ते। संवत्सरस्यैकमपि चरेत्कृच्छ्रं द्विजोत्तमः। अज्ञातभुक्तस्य शुध्यर्थं ज्ञानस्य च विशेष
तः। इस दृष्ट दोषेपि प्रायश्चित्तप्रतिपादनात्। नैतत् प्रायश्चित्तस्य जग्धिविषयत्वात्
दोषाभावस्य चान्योपयोगविषयत्वात्।। ।। शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतं।।

४१ तथा मांसं श्वचाण्डालक्रव्यादादिनिपातितं॥ ॥ महीगतं भूमिस्थमुदकमेकगवीतृप्तिज
ननसमर्थं चाण्डालादिभिरसंस्पृष्टं प्रकृतिस्थं रूपरसगन्धस्पर्शान्तरमनापन्नं शुचि। आ
चमनादियोग्यं भवति। महीगतमित्यशुद्धभूमिगतस्याशुचित्वनिषेधार्थं। न त्वन्तरिक्षो
दकस्याशुद्धत्वख्यापनार्थं। नाप्युद्धृतस्य। उद्धृताश्चापि शुध्यन्ति शुद्धैः पात्रैः समुद्धृताः।
एकरात्रोषिताश्चापस्त्याज्याः शुद्धा अपि स्वयमिति देवलवचनात्। तथ चण्डालादिखाते
तडागादौ न दोषः। अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा। तत्र स्नात्वा च पीत्वा च प्रायश्चि
त्तं न विद्यते॥ इति शातातपस्मरणात्। तथा मांसं श्वचाण्डालक्रव्यादादिनिपातितं शुचि।
आदिग्रहणात् लुब्धकादेरपि ग्रहणं। निपातितग्रहणं भक्षितनिराकरणार्थं॥ ॥ रश्मिर राम
ग्नी रजश्छाया गौरश्वो वसुधानिलः। विप्रुषो मक्षिकाः स्पर्शे वत्सः प्रस्नवने शुचिः॥ ॥
रश्मयः सूर्यादिप्रकाशा द्रव्यस्य। अग्निः प्रसिद्धः। रजः अजादिसंबंधिव्यतिरेकेण। तत्र
श्वकाकोष्ट्रखरोलूकशूकरग्राम्यपक्षिणां। अजाविरेणुसंस्पर्शादायुर्लक्ष्मीश्च हीय
ते इति दोषश्रवणात्। तत्स्पर्शे संमार्जनादि कार्यं। छाया वृक्षादेः। गौः। अश्वः। वसुधा पृ
नीहारबिंदवः २ थ्वी। अनिलो वायुः। विप्रुषः अवश्यायबिंदवः मुखजा नायस्पमाणत्वात्। मक्षिकाश्च।
एते चण्डालादिस्पृष्टा अपि स्पर्शे शुचयः॥ वत्सः प्रस्नवने ऊधोगतदुग्धाकर्षणे शुचिः।

वत्सस्य तत्क्षणे वालस्योपलक्षणार्थं। वालैरनुपरिक्तं तं नित्यं मेध्यमिति तात्स्मृतिरितिवचनात्॥
॥अजाश्वं मुखतो मेध्यं न गौर्न नरजा मलाः॥ पंथानश्च विशुध्यंति सोमसूर्यांशुमारुतैः॥ १॥
अजाश्वयोर्मुखं मेध्यं। न गोः। न नरजा मलाः। नरशब्दो लक्षणया देहमभिधत्ते न नरजा मला
वसादयो नमेध्याः॥ पंथानो मार्गाः। चंडालादिस्पृष्टा अपि रात्रौ सोमांशुभिर्मारुतेन च शुध्यं
ति। दिवा च सूर्यांशुभिर्मारुतेन च॥ ॥मुखजा विप्रुषो मेध्यास्तथाचमनबिंदवः॥ श्मश्रु चा
स्यगतं दंतसक्तं त्यक्त्वा ततः शुचिः॥ ॥मुखे जाता मुखजाः श्लेष्मा विप्रुषो मेध्याः। उच्छिष्टं
कुर्वंति अनिपतिता अंगे॥ न मुख्या विप्रुषः उच्छिष्टं कुर्वंति। न चेदंगे निपतंतीति गौत
मस्मरणात्। तथाचमनबिंदवः पादौ स्पृशंतीति तेऽपि मेध्याः। श्मश्रु चास्यप्रविष्टं उच्छिष्ट
न करोति। दंतसक्तं चान्नादिकं स्वयमेव च्युतं सत्त्यक्त्वा शुचिर्भवति। अच्युतं तु दंतसमं तथा
च गौतमः। दंतश्लिष्टेषु दंतवदिति। अन्यत्र जिह्वाभिमर्शनात्। प्राक् च्युतेरित्येके। च्युतेष्वा
स्राववद्विद्यान्निगिरन्नेव तच्छुचिरिति। निगिरणं पुनरनेन याज्ञवल्क्योक्तत्यागेन विक
ल्प्यते। निगिरन्नेवेत्येवकारः। चर्वणे त्वाचमेन्नित्यं मुक्त्वा तांबूलचर्वणं। ॐ ष्ठौ विलोमको
स्पृष्ट्वा वासो विपरिधाय चेति विष्णूक्ताचमनानिषेधार्थः। तांबूलग्रहणं फलादेरुपल
क्षणार्थं। तांबूले च फले चैव भुक्तस्नेहावशिष्टके। दंतलग्नस्य संस्पर्शे नोच्छिष्टो भवति द्वि

४२ नइत्तिशानात्तपस्मरणात्॥स्नात्वापीत्वाक्षुतेसुप्तेभुक्त्वारथ्योपसर्पणे।आचान्तःपुनरा द्विराचामेः
चामेद्वासोविपरिधायच॥ ॥स्नानेपानेक्षुतेस्वप्नेभोजनेरथ्योपसर्पणेवासोविपरिधाने
षुकृतेष्वाचांतःपुनराचामेत्।द्विराचमेदित्यर्थः।चकाराद्रोदनाध्ययनारंभेचापल्यान्
तोक्त्यादिषु।तथाचवसिष्ठः।सुप्त्वाभुक्त्वाक्षुत्वास्नात्वापीत्वारुदित्वाचांतःपुनराचामेदि
ति।मनुरपि।सुप्त्वाक्षुत्वाचभुक्त्वाचनिष्ठीव्योक्त्वानृतंवचः।पीत्वापोध्येष्यमाणश्चआ
चामेत्प्रयतोपिसन्निति।भोजनवादादावपिद्विराचमनंभोक्ष्यमाणःप्रयतोद्विराचमेदित्या
पस्तंबस्मरणात्।स्नानपानयोरादौसकृत्।अध्ययनेत्वारंभेद्विः।शेषेष्वंतएवयथो
क्तंद्विराचमनं॥ ॥रथ्याकर्दमतोयानिस्पृष्टान्यंत्यश्ववायसैः।मारुतेनैवशुध्यंति राम
पक्वेष्टकचितानिच॥ ॥रथ्यामार्गमात्रं।कर्दमः पंकः।तोयमुदकं।रथ्यास्थानिकर्द
मतोयानिअंत्यश्वचांडालादिभिःस्पृष्टानिमारुतेनैवशुध्यंतिवहुवचनंतृणगोमयपत्रा
करादिप्राप्त्यर्थं।पक्वेष्टकाचितानिधवलगृहादीनिचंडालादिस्पृष्टानिमारुतेनैवशु
ध्यंति।एतच्चप्रोक्षणसहजानामिसुक्तेप्रोक्षणनिषेधार्थं।तृणकाष्ठपर्णादीनांतुप्रो
क्षणमेवेति॥ ॥इतिद्रव्यशुद्धिप्रकरणं॥ ॥इदानींदानधर्मप्रतिपादयिषुस्तदंगभू
तपात्रप्रतिपादनार्थंतत्प्रशंसामाह।तपस्तप्त्वासृजद्ब्रह्माब्राह्मणान्वेदगुप्तये।तृ

स्यर्थं पितृदेवानां धर्मसंरक्षणाय च॥ ॥ब्रह्मा हिरण्यगर्भः कल्पादौ तपस्तप्त्वा ध्यानरूपं ब्रा
ह्मणं मुखात्सृजामीति पूर्वं ब्राह्मणं सृष्टवान्। किमर्थं। वेदगुप्तये। श्रुतिरक्षणा
र्थं। पितृगणदेवानां च तत्स्पर्थं। अनुष्ठानोपदेशद्वारेण धर्मरक्षणार्थं च। अतस्तेभ्योऽ
न्ये श्रेष्ठफलं भवती स्मृतिप्रायः॥ ॥सर्वस्य प्रभवो विप्राः श्रुताध्ययनशालिनः। ते
भ्यः क्रियापराः श्रेष्ठास्तेभ्योप्यध्यात्मवित्तमः॥ ॥सर्वस्य क्षत्रियादेर्विप्राः प्रभ
वः श्रेष्ठाः जात्या कर्मणा च। ब्राह्मणेष्वपि श्रुताध्ययनशालिनः श्रुताध्ययनसंप
न्ना उत्कृष्टाः। तेभ्योपि क्रियापरा विहितानुष्ठानशीलाः। तेभ्योप्यध्यात्मवित्तमाः। वस्य
मार्गेण शमदमादियोगेनात्मतत्वज्ञाननिरताः श्रेष्ठा इत्यनुषज्यते। एवं जा
ति विद्यानुष्ठानतपसो प्रशंसामुखेन एकैकयोगेन पात्रतामभिधायाधुना तेषां समु
च्चये संपूर्णपात्रतामाह॥ ॥न विद्यया केवलया तपसा वापि पात्रता॥ यत्र वृत्तमि
मे चोभे तद्धि पात्रं प्रकीर्तितं॥ ॥केवलया विद्यया श्रुताध्ययनसंपत्त्या नैव संपूर्णपा
त्रत्वं नैव केवलेन तपसा शमदमादिना। अपि शब्दात् केवलानुष्ठानेन केवलजात्या
वा नैव संपूर्णपात्रता। कथं तर्हि। यत्र पुरुषे च वृत्तमनुष्ठानं इमे चोभे विद्यातपसी सा:।
च शब्दात् ब्राह्मणजातिश्च तद्देव मन्वादिभिः संपूर्णपात्रं प्रकीर्तितं। हि यस्मादेभिः

४३ परमुत्कृष्टं पात्रं नास्ति॥ अनु च जातिविद्यावृत्तानां तपः समुच्चयानामुत्तरोत्तरं प्राशस्त्ये
न फलातिशयश्च बोद्धव्यः॥ ॥गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितं॥ नापात्रे विदुषा कि
ञ्चिदात्मनः श्रेय इच्छता॥ ॥पूर्वोक्ताय पात्राय गोभूतिलहिरण्यादिकमर्चितं दातव्यं। अर्चितं शास्त्रोक्तोद
कदानादिना कर्मणा सहितं देयं॥ अपात्रे क्षत्रियादौ ब्राह्मणे च पतितादौ॥ विदुषा पा
त्रविशेषेण फलविशेषं जानता श्रेयः संपूर्णफलमिच्छता किंचिदल्पमपि न दातव्यं॥ श्रे
योग्रहणात्तु अपात्रदानेपि किमपि नाम संफलमस्तीति सूचितं। यथाह भगवान्द्वैपायनः
॥अदेशकाले यद्दानमपात्रेभ्यश्च दीयते॥ असत्कृतमवज्ञातं तत्तामसमुदाहृतमि
ति॥ अपात्रे न दातव्यमिति वदता विशिष्टदेशकालद्रव्यसन्निधौ पात्रस्यासंनिधाने
द्रव्यस्य वा तदुद्देशेन त्यागं कृत्वा प्रतिश्रवणं वा कृत्वा समर्पयेत्। न त्वपात्रे न दातव्य
मिति सूचितं। तथा। प्रतिश्रुतमपि पश्चात्पातकादिसंयोगज्ञाने न देयं। प्रतिश्रुत्यापि
अधर्मसंयुक्ताय न दद्यादिति निषेधात्॥ ॥अपात्रे तु दातुर्निषेधमुक्त्वा प्रतिगृही राम
तारं प्रत्याह॥ विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः॥ गृह्णन्प्रदातारमधो नयत्या
त्मानमेव च॥ ॥विद्यातपोभ्यां हीनेन प्रतिग्रहः सुवर्णादिर्न ग्राह्यः॥ यस्माद्विद्यादि
हीनः प्रतिगृह्णन् स्वात्मानं दातारं चाधो नरकं प्रापयति। गवादि पात्रे दातव्यमित्यु

४३

कं तत्र विशेषमाह ॥ ॥दानं येषु संहपात्रे निमित्तेषु विशेषतः । याचितेनापि दातव्यं श्रद्धा
पूतं तु शक्तितः ॥ ॥प्रतिदिवसं शक्त्यनुसारेण यथोक्तविधिना पात्रे गवादिकं स्वर्णं तु
वा विशेषेण दातव्यं निमित्तेषु चन्द्रोपरागादिषु विशेषतोधिकं यत्नेन दातव्यं याचि
तेनापि श्रद्धापूतं ॥ अनसूयाविक्रीडितं शयादातव्यम् याचितेनापि दातव्यमिति वद
ताप यथोक्तं पात्रे स्वयमेव गत्वा आहूय वा यद्दानं तन्महाफलमुक्तं । यथा च स्मरणं ॥ ग
त्वा यद्दीयते दानं तदनंतफलं स्मृतं । सहस्रगुणमाहूय याचितेन तु तदर्धकं ॥ गवादि
के देयमिरुक्तं तत्र गोदाने विशेषमाह ॥ ॥हेमशृंगी शफै रौप्यैः सुशीला वस्त्रसंयुता
॥ सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा ॥ हेममयं शृंगयस्याः सा हेमशृंगी ॥ ॥
शफै रौप्यै राजतैः खुरैः संयुता वस्त्रेण च संयुक्ता कांस्यपात्रसहिता बहुक्षीरा गो
र्यथाशक्ति दक्षिणासहिता दातव्या ॥ ॥गोदानस्य फलमाह ॥ दातास्याः स्वर्ग
माप्नोति वत्सरान्रोमसंमितान् ॥ ॥कपिला चेत्तारयति पूर्वश्चासप्तमं कुलं ॥ ॥अ
स्या गोः रोमसंमितान्रोमसंख्याकान्वत्सरान्स्वर्गमाप्नोति दाता ॥ सा यदि सा कपि
ला तदा न केवलं दातारं तारयति । किंतु कुलमप्यासप्तमं सप्तममभिव्याप्य पित्रादी
न्षट्पुत्रादीन्षट् आत्मानं च सप्तमं यद्यपि भूयः शब्दः ॥ सवत्सारोमतुल्यानि यु
गान्युभयतोमुखी । दातास्याः स्वर्गमाप्नोति पूर्वेण विधिना ददत् ॥ ॥सवत्सारो

४४ सवत्सारोमतुल्यानि संहैवशेतंवक्त्री तइति स च शातस्यारोमतुल्यानि वत्सस्य गोश्वयावंति रो
माणि तावत्संख्याकानि युगानि तत्र वाद । निउभयतोमुखीं दत्वस्वर्गमाप्नोति ।
अनुभवति पूर्वेण विधिना ददतां वेत् ॥ ॥ कापुनरुभयतोमुखी कियंतं वा कालं सहो
कलमित्यत आह ॥ यावद्वत्सस्य पादौ मुखं योन्यां च दृश्यते ॥ तावद्गौः पृथिवी ज्ञेया
यावद्गर्भं न मुंचति ॥ ॥ गर्भान्निर्गच्छतो वत्सस्य द्वौ पादौ मुखं च यावत्कालं योन्यां
दृश्यते तावत्कालं उभयतो मुखमस्या अस्तीति उभयतोमुखी यावत्कालं गर्भं न मु
चति भावत्सा गौः पृथिवी ज्ञेया । अतः फलातिशयो युक्तः ॥ ॥ यथाकथंचिद्दत्वा गां
धेनुं वा धेनुमेव वा ॥ अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते ॥ यथाकिंचिद्विह
मश्रंगादिसंभवे पियथासंभवं पूर्वोक्तेन विधिना । धेनुं दोग्ध्रीमधेनुं वा अदो
ग्ध्रीं अरोगिणीं रोगरहितां । अपरिक्लिष्टां अस्तनां अबलीं यो ददाति दाता स्वर्गे सही
यते ॥ ॥ गोदानसमान्याह ॥ ॥ श्रांतसंवाहनं रोगिपरिचर्या सुरार्चनं ॥ पादशौचं
द्विजोच्छिष्टमार्जनं गोप्रदानवत् ॥ ॥ श्रांतस्य आसनशयनादिदानेन श्रमापनयनं
श्रांतसंवाहनं । रोगिणां परिचर्या आरोग्यौषधादिदानेन । सुरार्चनं हरिहरहिरण्य
गर्भादीनां गंधमाल्यादिभिराराधनं । पादशौचं द्विजानां समानानामधिकानां च तेषामे राम

वोछिष्टसमार्जनं। एतान्यनेनतरोक्तानि गोदानेन समानि॥ ॥भूदीपांश्चान्नवस्त्रांभास्तिल
सर्पिः प्रतिश्रयान् नैवेशिकं स्वर्णधुर्यं दत्त्वा स्वर्गे महीयते॥ ॥भूः फलप्रदा। दीपादे
वतायतनादिषु। प्रतिश्रयः प्रवासिनामाश्रयः॥ निवेसार्थं गार्हस्थ्यार्थं यत्कन्यादीयते
तन्नैवेशिकं। स्वर्णसुवर्णं। धुर्यो भारसहो बलीवर्दः। शेषं प्रसिद्धं। एतान्भूदीपादीन्
दत्त्वा स्वर्गलोके पूज्यते। स्वर्गफलं वस्तुमिदादनादीनां नफलांतरस्युदासार्थं। यत्किंचि
त्कुरुते पापं ज्ञानतोपि वा॥ अपि गोचर्ममात्रेण भूमिदानेन शुध्यति। तथा। वारिदस्तृ
प्तिमाप्नोति सुखमक्षय्यमन्नदः। तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमं। भूमिदो भू
मिमाप्नोति दीर्घमायुर्हिरण्यदः॥ गृहदोग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमं। वासोदश्चं
द्रसालोक्यमश्विसालोक्यमश्वदः। इत्यादि फलांतरश्रवणात्। गोचर्मलक्षणं बृह
स्पतिना दर्शितं। दशहस्तेन दंडेन त्रिंशद्दंडं निवर्तनं॥ दशतान्येव गोचर्म दत्त्वा स्वर्गे
महीयते। गृहधान्याभयोपानहछत्रमाल्यानुलेपनं॥ यानवृक्षं प्रियं शय्यां दत्त्वात्यंतसु
खी भवेत्॥ ॥गृहं प्रसिद्धं। धान्यानि च शालिगोधूमादीनि च। अभयं भीतत्राणं। उ
पानहौ छत्रं। माल्यं मालतिकादि। अनुलेपनं चंदनादि। यानं रथादि। वृक्षमुपजीव्य
माम्रादिकं। प्रियं यद्यस्य प्रियं धर्मादिकं शय्यां च दत्त्वा प्रसंततमतिशयेन सुखी भवेत्॥

४५ नचहिरण्यादिवत्।हस्तेदातुमशक्यस्यधर्मस्यदानासंभवोभूमिदानादावपिसमानत्वात्वस्य
संतरेपिधर्मदानस्यसमानत्।देवतानांगुरूणांचमातापित्रोस्तथैवच।पुण्यंदेयंप्रयत्नेनना
पुण्यंचोदितंकचित्।अपुण्यदानेनतदेववर्द्धते।प्रतिग्रहीतुरपिलोभादिनाप्रवृत्तस्य।यः
यापनबले।प्राप्तंप्रतिग्रहात्तिष्ठति।।गर्हितान्नचरणात्तस्यपापंतावत्समाश्रयेत्।समदि
गुणसाहस्रंचप्रदातृपुरुषैतिस्मरणात्।इहचसर्वत्रादिशकालपात्रविशेषाद्द्रव्यविशेषाद्दा
तृविशेषाच्चफलानांतारतम्यंद्रष्टव्यं।। ।।सर्वधर्मसयंब्रह्मदानेभ्योधिकंयतः।तद्द
समवाप्नोतिब्रह्मलोकमभीप्सितं।। ।।यस्मात्सर्वधर्म~~स्वयंब्रह्मदानेभ्योधिकंयतः~~।
~~तद्ददत्समवाप्नोतिब्रह्मलोकमभीप्सितं~~।।मयंब्रह्मअनबोधकत्वेनतस्मात्तद्दानंसर्वदानेभ्यो सम
धिकं।अतस्तद्ददत्अध्यापनादिद्वारेणब्रह्मलोकमवाप्नोति।अविच्युतंविच्युतिरहितंभ
वति।।आभूतसंप्लवंयावत्ब्रह्मलोकेवर्तते।अत्रचब्रह्मदानेपुरस्तादापादानमात्रंद
नं।स्वत्वमनिवृत्तेःकर्तुमशक्यत्वात्।। ।।दानफलमुक्तेदानव्यतिरेकेणापिदानफला
वाप्तिरित्याह।। ।।प्रतिग्रहसमर्थोपिनादत्तेयःप्रतिग्रहं।।येलोकादानशीलानांसता
प्नोतिपुष्कलान्।। ।।यःपात्रभूतोपिप्राप्तंप्रतिग्रहंसुवर्णादिकंनादत्तेनस्वीकरोति।
असौपथ्यप्राप्तेनोपादत्तेतत्तद्दानशीलानांयेलोकास्तानाप्नोतिसमग्रान्।। ।।इदानीं

सर्वत्रप्रतिग्रहनिवृत्तिप्रसंगेऽपवादमाह ।। ।।कुशाः शाकं पयो मत्स्या गंधाः पुष्पं दधि
क्षितिः ।। मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च ।। ।।धानाः भृष्टास्तंडुलाः क्षितिर्मृ
त्तिका । शेषं प्रसिद्धं । एतत् व्याधाकादिभिः स्वयमुपनीतं न प्रत्याख्येयं । चकाराद्गृहादि । शय्यां
गृहान्कुशान्गंधानपः पुष्पमणीन्दधि ।। मत्स्यान्धानाः पयो मांसं शाकं चैव न निर्णुदेत्
।।तथा एधोदकं मूलं फलमन्नमभ्युद्यतं च यत् ।। सर्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षि
णामिति स्मरणात् ।। ।।किमिति न प्रत्याख्येयमित्याह ।। ।।अयाचिताहृतं ग्राह्यमपि दुः
ष्कृतकर्मणः ।अन्यत्र कुलटाषंढपतितेभ्यस्तथा द्विषः ।। यस्मादयाचितमेतत् कुलटाषं
ढपतितेभ्यः शत्रोश्चाकुलटा कुलमटतीति कुलटा स्वैरिण्यादिका षंढस्तृतीया प्रकृतिः ।।
।।प्रतिग्रहनिवृत्तेरपवादांतरमाह । देवातिथ्यर्चनकृते गुरुभृत्यार्थवृत्तये ।। सर्वतः प्रति
गृह्णीया ।। दात्मवृत्त्यर्थमेव च ।। ।।देवतातिथ्यर्चनाद्यावश्यककार्यार्थं तदर्थमनापद्य
रणोत्पत्तिनाशशंकया कुत्सितवर्जं सर्वतः प्रतिगृह्णीयात् । गुरवो मातापित्रादयः । भृत्या
भरणीया भार्यापुत्रादयः ।। ।।इति दानधर्मप्रकरणं ।। ।।इदानीं श्राद्धप्रकरणमा
रभ्यते ।। ।।श्राद्धं नाम अदनीयस्य तत्स्थानीयस्य वा द्रव्यस्य प्रेतोद्देशेन श्रद्धया त्यागः ।
तच्च द्विविधं । पार्वणमेकोद्दिष्टं चेति । तत्र त्रिपुरुषोद्देशेन यत्क्रियते तत्पार्वणं । एकपुरु
षोद्देशेन क्रियमाणमेकोद्दिष्टं । पुनश्च तत्त्रिविधं । नित्यं नैमित्तिकं काम्यं च । तत्र नित्यं

४९ नियतनिमित्तोपाधौ चोदितं। अहरहः अमावास्याष्टकादिषु। अनियतनिमित्तोपाधौ चो
दितं नैमित्तिकं यथा पुत्रजन्मादिषु। फलकामनोपाधौ चोदितं काम्यं यथा स्वर्गादिकामा
नां त्रिरात्रिकादिषु नक्षत्रेषु। पुनश्च पंचविधं। अहरहः श्राद्धं वृद्धिश्राद्धं पार्वणमेकोद्दिष्टं
सपिंडीकरणं चेति।। तत्राहरहः श्राद्धमन्नेन पितृमनुष्येभ्य इत्यादिनोक्तं। अधुना पार्वणं वृद्धि
श्राद्धं च दर्शयिष्यंस्तयोः कालानाह।। ।।अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयं।। द
व्यं ब्राह्मणसंपत्तिर्विषुवत्सूर्यसंक्रमः।। व्यतीपातो गजच्छाया ग्रहणं चंद्रसूर्ययोः।। श्रा
द्धं प्रति रुचिश्चैवे श्राद्धकालाः प्रकीर्तिताः।। ।।यस्मिन्दिने चंद्रमा न दृश्यते सा अमा
वास्या। तस्यामहर्द्वयव्यापिन्यामपराह्णव्यापिनी ग्राह्या। अष्टकाश्च तस्रो हेमंतशिशिर राम
योश्चतुर्णामपरपक्षाणामष्टम्यो अष्टका इत्याश्वलायनोक्ताः। वृद्धिः पुत्रजन्मादिः।
कृष्णपक्षोऽपरपक्षः। अयनद्वयं दक्षिणोत्तरसंज्ञं। द्रव्यं कृशरपायसादिकं। ब्राह्मणसंपत्ति
र्वक्ष्यमाणा। विषुवद्द्वयं मेषतुलयोः सूर्यगमनं। सूर्यसंक्रमः आदित्यस्य राशेः राश्य
न्तरगमनं। अयनविषुवतोः संक्रांतित्वेन सिद्धेऽपि पृथगुपादानं फलातिशयप्रतिपाद
नार्थं। व्यतीपातो योगविशेषः। गजच्छाया।। यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः।
याम्या तिथिर्भवेत्सा हि गजच्छाया प्रकीर्तिता। इति परिभाषिता। हस्तिच्छाया इति केचित्सा
इह न गृह्यते। कालप्रक्रमात्। ग्रहणं चंद्रसूर्ययोरुपरागः। यदा च कर्तुः श्राद्धं प्रति रुचि ४९

र्भवति तदापि । चशब्दात्तु युगादिष्वप्यत्र । एते श्राद्धकालाः ॥ यद्यपि चेन्दुसूर्यग्रहेणाद्या
दित्वि ग्रहणे भोजननिषेधः । तथापि भोक्तुर्दोषो दातुरभ्युदयः ॥ ॥ अहरहः श्राद्धव्यतिरि
क्तवक्ष्यमाणचतुर्विधश्राद्धेषु ब्राह्मणसंपत्तिमाह ॥ ॥ अग्र्याः सर्वेषु वेदेषु श्रोत्रियो
ब्रह्मविद्युवा । वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः ॥ ॥ सर्वेषु ऋग्वेदादि
षु अनन्यमनस्कतयाभ्यस्तलितसाध्ययनक्षमा अग्र्याः । श्रोत्रियः श्रुताध्ययनसंपन्नः ।
वक्ष्यमाणं ब्रह्म यो वेत्ति स ब्रह्मवित् । युवा मध्यमवयस्कः । सर्वेषु विशेषणं । मंत्र
ब्राह्मणयोरर्थं वेत्तीति वेदार्थवित् । ज्येष्ठसाम सामविशेषस्तदध्ययनांगं व्रतं चेत्तद्व्र
ताचरणेन यास्तधीतेस्य ज्येष्ठसामा ॥ त्रिमधुः ऋग्वेदैकदेशास्तद्व्रतं च तद्व्रताचरणे
न तदध्यायी त्रिमधुः । त्रिसुपर्णकः । यजुषारैकदेशस्तद्व्रतं च तदाचरणेन यस्तदधी
ते स त्रिसुपर्णकः । एते ब्राह्मणाः श्राद्धसंपद इति वक्ष्यमाणक्रियासंबंधः ॥ ॥ स्वस्री
यो भागिनेयः । ऋत्विगुक्तलक्षणः । जामाता दुहितुर्भर्ता । त्रिणाचिकेतो यजुर्वेदैकदेश
स्तद्व्रतं च तद्व्रताचरणेन तदध्यायी त्रिणाचिकेतः । अन्यत्प्रसिद्धम् । एते च पूर्वोक्ता अग्र्या
श्रोत्रियाद्यभावे द्रष्टव्याः ॥ एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ॥ अनुकल्पस्त्व
यं ज्ञेयः सदा सद्भिरनुष्ठितः ॥ इत्यभिधाय मनुना स्वस्रीयादीनामभिहितत्वात् । कर्मनिष्ठा
स्तपोनिष्ठाः पंचाग्निर्ब्रह्मचारिणः । पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसंपदः ॥ ॥

विद्धप्रजननं शिश्नं येन छिन्न शिश्नः दुश्चर्मः ४७

४७ कर्मनिष्ठ विहितानुष्ठानतत्पराः ॥ तपोनिष्ठास्तपः शीलाः ॥ सभ्यावसथ्योत्रेता
ग्नयश्चयस्यसेतिसपंचाग्निः ॥ विद्याध्यायीचात्रह्मचारीउपकुर्वाणकोनैष्ठिकश्च
॥ पितृमातृपराशुश्रूषापराः ॥ चकारात् ॥ ज्ञाननिष्ठादयो ब्राह्मणान क्षत्रियादयः ॥
श्राद्धसंपदश्राद्धेषु अक्षयफलसंपत्तिहेतवः ॥ ॥ वर्ज्यानाह ॥ ॥ रोगीहीनाति
रिक्तांगः काणः पौनर्भवस्तथा ॥ अवकीर्णीकुंडगोलौकुनखीश्यावदंतकः ॥ ॥
रोगीमहारोगोपसृष्टः ॥ हीनमतिरिक्तं वाअंगंयस्यासौहीनातिरिक्तांगः ॥ एकेनाक्ष्णा
यो न पश्यतिसकाणः ॥ एतस्मादेवांधवधिरविद्धप्रजननखलतिदुश्चर्म
प्रभृतयः ॥ निरस्ताः ॥ पुनर्भूरक्षतयोनिस्तस्यां जातः पौनर्भवः ॥ अवकीर्णीब्रह्म राम
चार्येवस्खलितब्रह्मचर्यः ॥ कुंडगोलौ ॥ परक्षेत्रेसुतौ ॥ यतो दासुतौकुंडगोलकौ ॥
पत्यौजीवतिकुंडः स्यान्मृतेभर्तरिगोलकः ॥ इत्येवंलक्षणौ ॥ कुनखीसंकुचितनखः ॥
श्यावदंतः स्वभावकृष्णदशनः ॥ एतेश्राद्धेनिदिता इतिवक्ष्यमाणेनसंबंधः ॥ ॥
भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः ॥ मित्रध्रुक्पिशुनः सोमविक्रयीप
रिविंदकः ॥ वेतनग्रहणेनयोध्यापयतिसभृतकाध्यापकः ॥ वेतनदानेनयोधीतेसो
पि ॥ क्लीबोनपुंसकः ॥ असद्भिः तद्भिर्वादोपिः कन्यादूषयिताकन्यादूषी ॥ सत्ताअस
भृतकेनअध्यापको इत्यत्रवाधिकरणबहुव्रीहिणा ॥ आह ४७
१२

तथा ब्राह्मणहत्यादिनाभियुक्तोभिशस्तः ।। मित्रध्रुक् मित्रद्रोही मित्रस्यापकारी ।। प
रदोषकीर्त्तनशीलः पिशुनः ।। सोमविक्रयी यज्ञे सोमस्य विक्रेता ।। परिविंदकः परि
वेत्ता ।। ज्येष्ठे अकृतदारे अग्निपरिग्रहे वा यः कनीयान् दारपरिग्रहं करोति अग्निपरि
ग्रहं स परिवेत्ता स विज्ञेयः परिवेत्तिस्तु पूर्वज इति ।। एवं दारस्य याजकोपि ।
परिवित्तिः परिवेत्ता यया च परिविद्यते सर्वे ते नरकं दातृयाजकपंचमा इति व
चनात् ।। ।।मातापितृगुरुत्यागी कुंडाशी वृषलात्मजः ।। परपूर्वापतिः स्ते
नः कर्मदुष्टाश्च निंदिताः ।। ।।विनाकारणेन मातापितृगुरूंस्त्यजति स मातापि
तृगुरुत्यागी । एवं भार्यासुतत्याग्यपि । वृद्धौ च मातापितरौ साध्वी भार्या सुतः शि
शुः । अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत् । इति स्मरणनिर्देशात् ।। कुंडस्या
न्नं योश्नाति स कुंडाशी । तत्सुतो वृषलात्मजः । परपूर्वा पुनर्भूः तस्याः पतिः पर
पूर्वापतिः ।। अदत्तादायी स्तेनः ।। कर्मदुष्टाः शास्त्रविरुद्धकारिणः स्वकारात्कि
त्वे देवलकप्रभृतयः ।। एते श्राद्धे निंदिताः प्रतिषिद्धाः ।। अन्याः सर्वेषु वेदविद्वि सो
दिनाम् श्राद्धायोग्यब्राह्मणप्रतिपादनेनैव तद्व्यतिरिक्तानामयोग्यत्वसिद्धे पुनः
केषांचिद्रोग्यादीनां प्रतिषेधवचनमुक्तलक्षणब्राह्मणासंभवे प्रतिषेधरहितानां

४८ प्राप्स्यर्थः॥ ॥एवं श्राद्धकालानुक्त्वा अधुना पार्वणप्रयोगमाह॥ ॥निमंत्र
येत पूर्वेद्युर्ब्राह्मणानात्मवान्शुचिः॥ तैश्चापि संयतैर्भाव्यं मनोवाक्कायकर्मभिः॥ पू
र्वोक्तान्ब्राह्मणान्श्राद्धे क्षणः क्रियतामिति पूर्वेद्युः निमंत्रयेत। प्रार्थनया स्वीकारणं क
पणमथवेदपरेद्युर्वा। पूर्वेद्युर परेद्युर्वा श्राद्धकर्मण्युपस्थिते॥ निमंत्रयेत त्र्यव
रान्सम्यग्विप्रान्यथोदितानिति मनुस्मरणात्॥ आत्मवान्शोकोन्मादरहितश्च
न। यद्वा आत्मवानिति नियतेंद्रियो भवेत्। शुचिः प्रयतश्च। तैरपि निमंत्रितैर्ब्राह्म
णैर्मनोवाक्कायकर्मभिः संयतैर्नियतैर्भवितव्यमिति॥ ॥अपराह्णे स
मभ्यर्च्य स्वागतेनागतांस्तु तान्॥ पवित्रपाणिराचान्तानासनेषूपवेशयेत्॥ ॥ राम
अपराह्णे उक्तलक्षणे तान्विप्रान्निमंत्रितानाहूय स्वागतं इत्यनेन पूजयित्वा कृतपा
दधावनानाचान्तान्कुशेष्वासनेषु पवित्रपाणिः पवित्रपाणिरुपवेशयेत्। य
द्यपि सामान्येनापराह्ण इत्युक्तं। तथापि कुतपप्रारभ्य तदादिपंचसु मुहूर्तेषु प
रिसमापनं श्रेयस्करं। अनन्तौ मुहूर्ता विख्याता दश पंच च सर्वदा॥ तत्राष्टमो
मुहूर्तो यः स कालः कुतपः स्मृतः॥ मध्याह्ने सर्वदा यस्मान्मंदीभवति भास्करः।
तस्मादनन्तफलदस्तत्रारंभो विशिष्यते॥ ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयं।

४७ एकैकमेव वा दैवे पित्र्ये च एकैकमुपवेशयेत्। सभं ततो विकल्पः। मातामहानामपि
श्राद्धं निमंत्रणादि। द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वा इत्येवमेतत्पितृश्राद्धं कर्त्तव्यं।
पितृश्राद्धं मातामहश्राद्धं च वैश्वदेविकं वैश्वदेवं तंत्रेण वा कर्त्तव्यं यदा तु दैवे एवं ब्राह्म
णोल धौतु दावैश्वदेवपात्रं प्रकल्प्य भयात्रे कैकं ब्राह्मणं नियुञ्ज्यात्। यथाह वसि
ष्ठः। यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत्। अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य च
। देवतायतने कृत्वा ततः श्राद्धं प्रवर्त्तयेत्। प्रास्येदग्नौ तदन्नं च दद्याद्वा ब्रह्मचारिण इति
॥ ॥ पाणिप्रक्षालनं दत्वा विष्टरार्थं कुशानपि। आवाहयेदनुज्ञातो विश्वे देवास इत्यृ
चा॥ ॥ तदनंतरं वैश्वदेवार्थब्राह्मणहस्ते जलं विष्टरार्थं कुशांश्च युग्मान् द्विगुणि राम
तानासनेदक्षिणतो दत्वा विश्वान्देवानावाहयिष्ये इति ब्राह्मणान्पृष्ट्वा तैरावाहय
स्वनुज्ञातो विश्वेदेवास आगत इत्यनया ऋचा। आगच्छंतु महाभागा विश्वेदेवा महाबलाः
। ये यत्र विहिताः श्राद्धे सावधाना भवंतु ते इत्यनेन स्मार्त्तमंत्रेण तानावाहयेत्।
एतच्च यज्ञोपवीतिना सव्येन प्रदक्षिणेन च कार्यं॥ अपसव्यं ततः कृत्वा पितृणा
मप्रदक्षिणमिति पित्र्ये विशेषश्रवणात्॥ ॥ यवैरन्ववकीर्याथ भाजने सपवित्रके।
शन्नोदेव्या पयः क्षिप्त्वा यवोसीति यवांस्तथा॥ या दिव्या इति मंत्रेण हस्तेष्वर्घ्यं विनि

४७

क्षिपेत् । ततो वैश्वदेवार्घ्यपात्रासनसमीपे भूमिं प्रोक्ष्य दक्षिणेन यवैरास्तीर्य अनंतरं तेनैव सादिता
जनेन पवित्रके कुशयुग्मान्तर्हिते तेन शन्नो देवीरभिष्टय इति मंत्रेण पयः क्षिप्त्वा यवोसि धान्यराजो
वेत्यादिना मंत्रेण यवान् ।। ततो गंधपुष्पाणि च क्षिप्त्वा तेन रसपूर्णपात्रं निधाय तद्धस्ते कुशग्रहणहस्तेषु
या दिव्या आप इत्यादिमंत्रेण विश्वे देवा इदं वो अर्घ्यमिति सर्घोदकं विनिक्षिपेत् ।। दत्त्वोदकं गंधमा
ल्यं धूपदानं सदीपकं । अथ करशौचार्घ्यमुदकं दत्त्वा यथाक्रमेण गंधपुष्पधूपदीपदानं कुर्यात् ।
तथाच्छादनदानं च । गंधादीनां च स्वस्वतंत्रोक्तो विशेषो द्रष्टव्यः । चंदनं कुंकुमं कर्पूरागरुपद्म
कान्यनुलेपनार्थमिति विष्णुनोक्तं । पुष्पाणि च । श्राद्धे जात्यः प्रशस्ताः स्युर्मल्लिका श्वेतयूथि
का । जलोद्भवानि सर्वाणि कुसुमानि च चंपकं । इत्याद्युक्तानि । वर्ज्यान्यपि च । उग्रगंधीन्यगंधीनि ।
चैत्यवृक्षोद्भवानि च ।। पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च ।। न केतकिजं कंटकिजमपि शुक्लं
सुगंधि पत्रं न दद्यान्नरक्तं दद्यात् । रक्तमपि च कुंकुमं जलजं च दद्यात् । इत्यादीनि द्रव्याणि
। धूपे च विष्णुना विशेष उक्तः ।। प्राण्यंगं सर्वं धूपार्थे न दद्यात् । घृतेन मधुसंयुक्तं गुग्गुलं श्रीखंडा
गुरुदेवदारुसरलादि दद्यादिति ।। दीपे च विशेषः शंखेनोक्तः ।। घृतेन दीपो दातव्यस्तिलतैले
न वा पुनः ।। वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत् । आच्छादने वस्त्रयुक्तं नवमहतं सदशं दद्यादि
ति । एतच्च सर्वं वैश्वदेवानुष्ठानं उदङ्मुखः कुर्यात् । पित्र्यं तु दक्षिणामुखः । यथाह वृ
द्धशातातपः ।। उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः ।। प्रदद्यात्पार्वणे सर्वं दैवपूर्वं विधा

५० नतइति ॥ ॥ अपसव्यंततःकृत्वापितॄणामप्रदक्षिणं। द्विगुणांस्तुकुशान्दत्वाह्युशंत
स्त्वेत्यृचापितॄन् ॥ आवाह्यतदनुज्ञातोजपेदायंतुनस्ततः ॥ ॥ ततोवैश्वदेविकावाह
नानंतरंअपसव्यंयज्ञोपवीतंप्राचीनावीतंकृत्वाअत्रततइतिवदताकालानुसमयोदर्शितः।
पित्रादीनांत्रयाणांअयुग्मान्कुशान्द्विगुणभुग्नान्प्रदक्षिणंवामतोविष्टरार्थमासनेषू
दकपूर्वंदत्वापुनरुदकंदद्यात् ॥ अपःप्रदायद्विगुणभुग्नास्तुकुशान्दत्वाअपःप्रदायेतिआ
श्वलायनस्मरणात्। एतच्चार्घ्यंतयोरुदकदानंवैश्वदेवेपित्र्येचप्रतिपदार्थंद्रष्टव्यं ॥ अ
थपितॄन्पितामहान्प्रपितामहान्आवाहयिष्यइतिब्राह्मणान्पृष्ट्वाआवाहयेति
तैरनुज्ञातः उशंतस्त्वेत्यृचापित्रादीनावाह्यआयांतुनःपितरइतिमंत्रेणोपतिष्ठेत् ॥ ॥ राम
यवार्थास्तुतिलैःकार्याःकुर्यादर्घ्यादिपूर्ववत् ॥ दत्वार्घ्यंसंस्रवांस्तेषांपात्रेकृत्वाविधानतः ॥
पितृभ्यःस्थानमसीतिन्युब्जंपात्रंकरोत्यधः ॥ ॥ ॥ यवार्थायवसाध्यानिकार्याणिअवकिर
णादीनितिलैःकार्याणि। ततोर्घ्यपात्रसाधनाच्छादनांतंपूर्ववत्कुर्यात् ॥ तत्रायंविशे
षः। तिलानपहताअसुरारक्षांसिवेदिषदइत्यनेनमंत्रेणब्राह्मणान्परितोऽवकिरणमनंत
रंपात्रेषुराजतादिपात्रेषुअयुग्मकुशनिर्मितकूर्चांतर्हितेषुशंनोदेवीरित्यपःक्षिप्त्वाति
लोसिसोमदेवत्यइत्यादिमंत्रेणतिलान्गंधपुष्पाणिचक्षिप्त्वास्वधार्घ्यइतिब्राह्मणा
नांपुरतोऽर्घ्यपात्राणिस्थापयित्वायादिव्याइतिमंत्रांतेपितरिदंतेअर्घ्यंपितामहेदंतेअर्घ्यंप्र ५०

पितामहेदंतेअर्घ्यमितिब्राह्मणानांहस्तेऽर्घंदद्यादेकैकमुभयत्रैवंतस्मिन्नपिपक्षेपात्रत्र
येकार्यं। एवमर्घ्यंदत्वातेषांमर्घ्याणांसंस्रवान्ब्राह्मणहस्तगलितानर्घोदकानिपितृ
पात्रेसंगृहीत्वादक्षिणाग्रेषुकुशास्तीर्णभूमौनिधायतस्योपरिपितृभ्यःस्थानमसीत्यनेनमं
त्रेणतत्पात्रंन्युब्जमधोमुखंकुर्यात्। तस्योपरिअर्घपात्रपवित्राणिनिदध्यात्। अनं
तरंगंधपुष्पधूपदीपाच्छादनादीनिपितरयंतेगंधःपितरिदंतेपुष्पमित्यादिप्रयोगेण
दद्यात्। अग्नौकरिष्यन्नादायपृच्छत्यन्नंघृतप्लुतं। कुरुष्वेत्यभ्यनुज्ञातोकृत्वाग्नौपितृय
ज्ञवत्। हुतशेषंप्रदद्यात्भाजनेषुसमाहितः॥ यथालाभोपपन्नेषुरौप्येषुचविशेषतः॥
॥ अनंतरमग्नौकरिष्यन्घृतप्लुतमन्नमादायब्राह्मणान्पृच्छेत्॥ अग्नौकरिष्ये
इतिघृतग्रहणंसूपशाकादिनिवृत्त्यर्थं। ततस्तैःकुरुष्वेत्यभ्यनुज्ञातःप्राचीनावीतीअग्नि
मुपसमाधायमेक्षणेनावदायसंपदानुकुर्यात्। सोमायपितृमतेस्वधानमः। अग्न
येकव्यवाहनायस्वधानमइतिपिंडपितृयज्ञकल्पेनाग्नौहुत्वामेक्षणमनुप्रहृत्यहुतशे
षमन्नमपवर्ग्ययथालाभोपपन्नेषुविशेषतोरौप्येषुपित्र्यादिभाजनेषुदद्यात्। नवैश्वदे
वभाजनेषुसमाहितोऽनन्यमनस्कः। अत्रयथाग्नौहवनविशेषणोक्तंतथाप्याहि
ताग्नेःसर्वाधानपक्षेउपासनाग्नेरभावात्पिंडपितृयज्ञानंतरभाविनिपार्वणश्राद्धे

५१ विहितत्वाद्दक्षिणाग्नेः संनिधानाद्दक्षिणाग्नौ। कर्मसमर्त्तेर्विवाहाग्नावित्यस्यापवादद
र्शनात्। यथाह मार्कंडेयः॥ आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः॥ अनाहि
ताग्निस्त्वौपसदे अग्न्यभावे द्विजेऽप्सु वेति। अर्धाधानपक्षे त्वौपासनाग्निसद्भावादाहि
ताग्नेरनाहिताग्नेश्चौपासनाग्नावग्नौकरणहोमः॥ एवमन्वष्टकादिषु त्रिष्वपि पिंड
पितृयज्ञकल्पातिदेशात्। काम्यादिषु चतुर्षु ब्राह्मणपाणावेव होमः। यथाहुर्गृह्यकाराः॥
अन्वष्टक्यं च पूर्वेद्युर्मासि मास्यथ पार्वणं॥ काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्ट
मं॥ चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते॥ पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतु
र्ष्वपि॥ ॥ अस्यार्थः॥ हेमंतशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इत्यष्ट
का विहिताः। तत्र नवम्यामुक्तक्रियत्वेनान्वष्टक्यं। सप्तम्यां तु क्रियमाणं पूर्वेद्युर्मा राम
सि तस्मिन्पक्षे पंचमीप्रभृतिषु यस्यां कस्यां चित्तिथावन्वष्टकातिदेशेन यद्विहितं।
अमावास्यायां पिंडपितृयज्ञानंतरं यद्विहितं तत्पार्वणं। स्वर्गादिकामनया कृत्तिका
दिषु नक्षत्रेषु यद्विहितं तत्काम्यं। अभ्युदयेषु नगराराामदेवताप्रतिष्ठादिषु यद्विहि
तं॥ अष्टम्यां माघ्यष्टका विहिता। एकोद्दिष्टं अत्रैकोद्दिष्टशब्देन सपिंडीकरणं लक्ष्य
ते तत्रैकोद्दिष्टस्यापि संभवात्। साक्षादेकोद्दिष्टे तदभावात्। अग्नौकरणस्याभा ५१

वस्यर्थः॥ अथ प्रागुक्तभाष्यकारमतेन साक्षादेकोद्दिष्टेऽपि पाणौ होमस्य सम्भवादे
कोद्दिष्टमेव॥ एतेषामष्टानामाद्येषु चतुर्षु साग्निकस्याग्नौ होमः॥ उत्तरेषु चतुर्षु पितृ
ब्राह्मणहस्ते निरग्निकस्यापि प्रमीतपितृकस्य द्विजस्य पार्वणेऽन्यस्मिंस्तस्यापि पाणा
वेव होमः॥ न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः॥ इंदुक्षये मासि मासि प्रायश्चित्तीयते
तु स इति वचनात्॥ एवं काम्याभ्युदयिकाष्टकैकोद्दिष्टेष्वपि पाणावेव होमः॥ अग्न्य
भावे तु विप्रस्य पाणावेवोपपादयेदिति मनुस्मरणात्॥ पाणिदत्तस्य पृथक् ग्रासप्रति
षेधश्च दृश्यते॥ यथाहुर्गृह्यकाराः॥ अन्नं पाणितले दत्तं पूर्वमश्नंत्यबुद्धयः॥ पितरस्ते
न तृप्यंति शेषान्नं न लभंति ते॥ पश्चात्पाणितले दत्तं॥ पश्चादन्यदुपकल्पितं॥ एकीभावेन
भोक्तव्यं पृथग्भावो न विद्यत इति॥ ॥दत्वान्नं पृथिवी पात्रमिति पात्राभिमंत्रणं॥
इदं विष्णुरित्यन्ने द्विजांगुष्ठं निवेशयेत्॥ अन्नमोदनसूपपायसपूपादिकं भोज
नेषु दत्वा पृथिवी ते पात्रमित्यादिना मंत्रेण पात्राभिमंत्रणं कृत्वा इदं विष्णुर्विचक्रम इ
त्येतमंत्रेणान्ने द्विजांगुष्ठं निवेशयेत्॥ तत्र च वैश्वदेवे यज्ञोपवीती विष्णो हव्यं रक्षस्वे
ति पित्र्ये प्राचीनावीती विष्णो कव्यं रक्षस्वेति॥ विष्णो हव्यं च कव्यं च ब्रूयाद्रक्षेति वै क्रमा
दिति स्मरणात्॥ ॥सव्याहृतिकां गायत्रीं मधुवाता इति त्र्यृचं॥ जप्त्वा यथासुखं वा

५२ च भुंजीरंस्तेपि वाग्यताः ॥ ॥ अनंतरं विश्वेभ्यो देवेभ्य इदमन्नं परिविष्टं परिवेष्यमाणं
चास्तु ते इति प्रवादकेन निवेद्य। तथा पित्रे अमुकगोत्रायामुकशर्मणे इदमन्नं परिवेष्य
माणं चास्तु ते इति तिलोदकेन पित्रे निवेद्यैवं पितामह प्रपितामहाय च निवेद्यानंतर
मपोशानं दत्वा पूर्वोक्ताभिर्व्याहृतिभिः सहितां गायत्रीं मधुवाता ऋतायते इत्यृचं मधुमध्विति
वारत्रयं जप्त्वा यथासुखं जुषध्वमिति ब्रूयात्। संकल्प पितृदेवेभ्यः सावित्रीं मधुमज्ज
पः ॥ श्राद्धे विप्रापोशानं जुषध्वमेतेषां भोजनं ॥ तथा। गायत्री त्रिः सकृद्वापि जपेद्व्याहृ
तिपूर्विकां ॥ मधुवाता इती त्र्यृचं मध्वित्येतत्त्रिकं तथा। इति पारस्करादि वचनात्।
भुंजीरंस्तेपि वाग्यताः। तेपि ब्राह्मणा वाग्यता मौनिनो भुंजीरन् ॥ ॥ अन्नमिष्टं हवि राम
ष्यं च दद्यादक्रोधनोत्वरः। आतृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं तथा ॥ ॥ अन्नं भ
क्ष्यभोज्यलेह्यचोष्यपेयात्मकं पंचविधं। इष्टं यद्ब्राह्मणाय प्रेताय कर्त्रे वा रोचते।
हविष्यं श्राद्धे हविर्योग्यं व्रीहिशालियवगोधूममुद्गमाषमुन्यन्नकालशाकमहाशल्के
लाशुंठीमरीचहिंगुगुडशर्कराकर्पूरसैंधवसांभरपनसनालिकेरकदलीबदर
गव्यपयोदधिघृतपायसमधुमांसप्रभृति स्मृत्यंतरप्रसिद्धं वेदितव्यं। हविष्यानि
सनेनैवायोग्यस्य स्मृत्यंतरप्रतिषिद्धस्य कोद्रवमसूरचणककुलत्थपुलाकनि

कश्मीरदेशे करमकल्लेतिप्रसिद्धः। मत्स्यविशेषः ॥ ४ ५२

ष्यानराजमाषकूष्माण्डवंशीकवर्त्तीयोपोतकीवंशांकुरपिप्पलीववाराह्यान्नपुष्पोषाविरलमल
माहिषचामरक्षीरदधिघृतपायसादीनां निवृत्तिः ॥ अक्रोधनः शौचपरस्तु सेभवेपि ॥ अलेखः
अत्यग्रः ॥ आदृ सैदस्यादिति संबंधः ॥ तुरावन्नत्र यथा किंचिदुच्छिष्यते तथा स्यात् ॥ उच्छे
षणस्य दासवर्गभागधेयत्वात् ॥ उच्छेषणं भूमिगतमजिह्मस्याशठस्य च ॥ दासवर्गस्य तत्पि
त्र्ये भागधेयं प्रचक्षते ॥ ॥ इतिमनुस्मरणात् ॥ ॥ तथा अश्नत्सु पवित्राणि पुरुषसूक्तं
पावमानप्रभृतीनि जपान्नस्नान्नार्थ पूर्वोक्तं जपं च समाप्ति कामि स्वाधुकं जपेत् ॥ ॥
अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य च ॥ तदन्नं प्रकिरेद्भूमौ दद्याच्चापः सकृत्सकृ
त् ॥ ॥ अनन्तरं सर्ववर्णमादाय तृप्ताः स्थ इति तान्पृच्छेत् तृप्ताः स्म इति तैः प्रत्युक्तः
शेषमन्नमप्यस्ति किं क्रियतां इति पृच्छेत् इष्टैः सहोपभुज्यतामिति सम्यक्पृगमप्य तदन्नं पितृ
स्थाने ब्राह्मणस्य पुरस्तादुच्छिष्टसन्निधौ दक्षिणाग्रदर्भान्तर्हितायां भूमौ तिलोदकप्रक्षेप
पूर्वकं येऽग्निदग्धा इत्यनया विकिरेत् पुनस्तिलोदकं प्रक्षिपेत् ॥ तदनन्तरं ब्राह्मणहस्ते
पुङ्गृषार्थं सकृत्सकृदपो दद्यात् ॥ ॥ सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ॥ उच्छिष्ट
सन्निधौ पिंडान्दद्याद्वै पितृयज्ञवत् ॥ ॥ सिद्धपितृयज्ञकल्पातिदेशेनचरुश्रपणस्थाने
अग्नौकरणशिष्टशेषेण सह सर्वान्नमुपादायाग्निसन्निकृष्टे पिंडान्दद्यात् ॥ तदभावे
ब्राह्मणार्थं सार्ववर्णिकमन्नमुपादाय सतिलं तिलमिश्रं दक्षिणामुख उच्छिष्टसन्निधौ

पिंडपितृयज्ञकल्पेन पिंडान्दद्यात्॥ मातामहानामप्येवं दद्यादाचमनं ततः॥ स्वस्तिवाचनं
ततः कुर्यादक्षय्योदकमेव च॥ ॥मातामहानामपि विश्वेदेवावाहनादि पिंडप्रदानपर्यंतं कर्म
एवमेव कर्तव्यं॥ ॥अनंतरं ब्राह्मणानामाचमनं दद्यात्। ततः स्वस्तीति ब्रूतेति ब्राह्मणा
न्स्वस्तिवाचयेत्ते च स्वस्तीत्युक्ते अक्षय्यमस्त्विति ब्रूतेति ब्राह्मणान् हस्ते सोदकदानं कुर्या
त्॥ ते चाक्षय्यमिति वक्तव्यं॥ ॥दत्वा तु द॥ दक्षिणां शक्त्या स्वधाकारमुदाहरेत्॥ वाच्य
तामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यतां॥ ॥अनंतरं यथाशक्ति हिरण्यरजतादि दक्षिणां
दद्यात् स्वधां वाचयिष्ये इत्युक्ते ब्राह्मणैर्वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः पित्रादिभ्यो मा
तामहादिभ्यश्च स्वधोच्यतामिति स्वधाकारमुदाहरेत्॥ ॥ब्रूयुरस्तु स्वधेत्युक्ते भूमौ राम
सिंचेत्ततो जलं॥ विश्वेदेवाश्च प्रीयंतां विप्रैश्चोक्ते इदं जपेत्॥ ॥ते च ब्राह्मणाः अस्तु
स्वधेति ब्रूयुः। त एवमुक्ते अनंतरं कमंडलुना उदकं भूमौ सिंचेत्। ततो विश्वेदेवाः प्री
यंतामिति ब्रूयात्॥ ब्राह्मणैश्च प्रीयंतां विश्वेदेवा इत्युक्ते इदमनंतरोच्यमानं च जपेत्॥ ॥
दातारो नोभिवर्द्धंतां वेदाः संततिरेव च॥ श्रद्धा च नो मा व्यगमद्बहु देयं च नोस्त्विति॥
॥दातारो हिरण्यादेः नः अस्माकं कुले अभिवर्द्धंतां बहवः संतु। वेदाश्च वर्द्धंतां॥ अ
ध्ययनाध्यापनतदर्थज्ञानानुष्ठानद्वारेण। संततिश्च पुत्रपौत्रपरंपरया। श्रद्धा

चपित्र्यैककर्मणिआस्था।नअस्माकंमार्थोप्रगमन्तु।मापगच्छन्तु।देयंचहिरण्यादिवृद्ध्यप
र्यंतंअस्माकंभवतितिजपेदित्सम्बन्धः॥ ॥इत्युक्तौक्ताप्रियावाचः प्राणिपत्यविस
र्जयेत्॥वाजेवाजइतिप्रीतः पितृपूर्वंविसर्जनं॥ ॥एवंपूर्वोक्तप्रार्थनामंत्रंजपन्तृप्ताउक्ता
चप्रियावाचःप्रीतिकराणिवाक्यानि।धन्यावयंभवच्चरणकमलयुगलरजःपवित्रीकृ
तमस्मन्मंदिरंत्वाकाग्रहानयालंकरामा।विगणपाभवद्भिरनुगृहीतावयमित्येवंरूपाः।
प्राणिपत्यप्रदक्षिणपूर्वकंनमस्कृत्यविसर्जयेत्।कथंविसर्जयेदित्साह।वाजेवाजेव
तवाजिनोनृइत्यनयर्चापित्र्यनयर्चापितृपूर्वंप्रपितामहादिविश्वेदेवांतंदर्भानारंभये
नुतिष्ठंतुपितरइतिप्रीतः सुप्रीतमनाविसर्जनंकुर्यात्॥ ॥यस्मिंस्तेसंस्रवाःपूर्वमर्
घपात्रेनिवेशिताः।पितृपात्रंतदुत्तानंकृत्वाविप्रान्विसर्जयेत्॥ ॥यस्मिन्नर्घपात्रेपूर्व
मर्घदानानंतरंतेसंस्रवाब्राह्मणहस्तगलितार्घोदकानिनिवेशिताःस्थापितास्तत्पि
तृपात्रंन्युब्जंसदुत्तानमूर्ध्वमुखंकृत्वाविप्रान्विसर्जयेत्।एतच्चाशीर्मंत्रजपादूर्ध्वंवा
जेवाजइत्यतःप्राक्कृष्टव्यंकृत्वाविसर्जयेदितिकात्यायनवचनात्॥ ॥प्रदक्षिणमनु
व्रज्यभुंजीतपितृसेवितंब्रह्मचारीभवेत्तांतुरजनींब्राह्मणैःसह।अनंतरंआसीमांतंब्राह्म
णाननुव्रज्यतैरास्यतामित्यनुज्ञातःतान्प्रदक्षिणीकृत्यप्रतिनिवृत्तःपितृसेवितंश्राद्ध
शिष्टंमिष्टं।सहभुंजीतनियमएवायं।नपरिसंख्या।मांसेनुपपाद्यचौनिद्विजकाम्यये

५४ यत्रोक्तं। यस्मिन्दिने श्राद्धं तत्तत्संबंधिनीं रात्रिं भोक्ता भिन्नाहारैः सह कर्ता ब्रह्मचारी भवेत्
तुराव्दास्तु पुनर्भोजनादिरहितः। पुनर्भोजनमध्वानं भाराध्ययनमैथुनं। दानं प्रतिग्रहं होमं श्रा
द्धभुक्त्वष्ट वर्जयेत्। दंतधावनतांबूलं स्निग्धमभोजनं रत्नौषधपरान्नानि श्राद्धकृत्सप्त
स वर्जयेत्॥ इति वचनात्॥ एवं पार्वणश्राद्धमुक्त्वेदानीं वृद्धिश्राद्धमाह॥ ॥एवं प्रदक्षि
णावृत्को वृद्धौ नांदीमुखान्पितॄन्॥ यजेत दधिकर्कंधुमिश्रान्पिंडान्यवैः क्रियाः॥ ॥
वृद्धौ पुत्रजन्मादिनिमित्ते श्राद्धे एवमुक्तेन प्रकारेण पितॄन्यजेत पूजयेत्। तत्र विशेषमाह।
प्रदक्षिणावृत्क इति प्रदक्षिणा आवृत् अनुष्ठानपद्धतिर्यस्यासौ प्रदक्षिणावृत्कः प्रदक्षि
णमुपचार इति यावत्। नांदीमुखानिति पितॄणां विशेषणं मंत्रावाहनादौ नांदीमुखा
न्पितॄन्नावाहयिष्ये नांदीमुखान्पितामहानित्यादिप्रयोगो द्रष्टव्यः। कथं यजेतेत्याह। राम
दधिकर्कंधुमिश्रानिति। कर्कंधु बदरफलं दध्ना बदरफलैश्च मिश्रान्पिंडान्दत्त्वा यजे
तेति संबध्यते। तिलसाध्याः क्रियाः सर्वा यवैः कर्तव्याः। अत्र च ब्राह्मणसंख्या दर्शिते
वा। दैवे युग्मानेत्यत्र प्रदक्षिणावृत्कादिपरिगणनमन्येषामपि सत्संप्रदायोक्तविशेषध
र्माणां प्रदर्शनार्थं। यथाहाश्वलायनः। आभ्युदयिके युग्मा ब्राह्मणाः। अमूला दर्भाः।
प्राङ्मुखो यज्ञोपवीती स्यात्। प्रदक्षिणमुपचारो यवैस्तिलार्थो गंधादिदानं दधि [illegible]

त्रीनां सत्वेद्ध्याय्यवोसिसोमदेवस्योगोसवोदेवनिर्मितः ॥ प्रभुमद्भिः पत्नेः पुष्पानांदी-
मुखान्पितृनुमांल्लोकान्प्रीणाहि नः स्वाहेतिपवावपनं विश्वेदेवरुद्वोऽर्घ्य । नांदीमुखान्
पितरइदं वोऽर्घ्यमिति । यथालिंगमर्घ्यप्रदानं । पाणौ होमोऽग्नये कव्यवाहनाय स्वाहा । सोमाय
पितृमते स्वाहेति । मधुवाता ऋतायत इति तृचस्थाने उपास्मै गायतेति पंचमधुमती । श्रावयेत्
॥ अक्षन्नमीमदन्तेति च पंक्ति ॥ आचांतेषु मुक्ताशयान्गोमयेनोपलिप्तेषु प्राचीनाग्रान्द
र्भान्संस्तीर्य तेषु पृषदाज्यमिश्रेण भुक्तशेषेणैकैकस्य द्वौ द्वौ पिंडौ दद्यादिति । यथाह शाना
तपः । मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनंतरं ॥ ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृ
तमिति । अत्र च श्राद्धे माध्यमापार्वणादिवत् पितृश्राद्धेऽतृतीयो नास्तीति न प्रयत्नमे
चत्वासंकर्तव्यं अत्र मातृश्राद्धे न पितृरादित्रयपत्नी मात्ग्रहणं ॥ ॥ एकोद्दिष्टमाह ॥ ॥
एकोद्दिष्टं देवहीनमेकार्घैकपवित्रकं ॥ आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥
एकोद्दिष्टं एक उद्दिष्टो यस्मिन् श्राद्धे तदेकोद्दिष्टमिति कर्मनामधेयं । शेषं पूर्ववदा
चरेदिति ॥ उपसंहारासार्वणसकलधर्मप्राप्तौ विशेषाभिधानात् । देवहीनं विश्वे
देवरहितं । एकार्घपात्रं एकदर्भपवित्रं च । आवाहनाग्नौकरणहोमेन रहितं । अपस
व्यवत् । प्राचीनावीतीब्रह्मसूत्रवत् । अनेनन्तरश्लोकोक्तापुदचिके यज्ञोपवीतीत्वं सूचयति ॥ ॥

५५ किंच॥ उपतिष्ठतामक्षय्यस्थाने विप्रविसर्जनेऽभिरम्यतामिति वदेत् ब्रूयुस्तेऽभिरताः स्म ह॥ स्वस्तिवाच्यं
ततः कुर्यादक्षय्योदकमेव चेति॥ तत्राक्षय्यस्थाने उपतिष्ठतामिति ब्रूयात् वदेत्॥ ते चापि ब्राह्मणाः
विप्रविसर्जने कर्त्तव्ये वाजे वाजे वत इति जपानंतरं अभिरम्यतामिति ब्रूयात् वदे
त्॥ ते चापि ब्राह्मणाः अभिरताः स्म ह इति ब्रूयुः॥ प्रसिद्धः शेषं प्रसिद्धपूर्वं वदितियावत्॥ एतच्च
मध्याह्ने कर्तव्यं॥ यथाह देवलः॥ पूर्वाह्णे दैविकं श्राद्धं अपराह्णे तु पैतृकं॥ एकोद्दिष्टं तु मध्या
ह्ने प्रातर्वृद्धिनिमित्तकमिति॥ भुंजीत पितृसेवितामित्यस्य एकोद्दिष्टविशेषनिषेधोऽपि॥ नवश्रा
द्धेषु मधिच्छन्नेहे पर्युषितं च यत्॥ दंपत्योर्भुक्तशेषं तु न भुंजीत कदाचन इति॥ नवश्राद्धं दर्शितं॥ प्र
थमेऽह्नि तृतीयेऽह्नि पंचमे सप्तमे तथा नवमैकादशे चैव तन्नवश्राद्धमुच्यत इति॥ ॥सपिंडी
करणमाह॥ गंधोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयं॥ अर्घार्थं पितृपात्रेषु प्रेतपात्रं प्रसेच शाम
येत्॥ ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत्॥ एतत्सपिंडीकरणमेकोद्दिष्टं स्त्रिया अपि॥
॥गंधोदकतिलैर्युक्तं पात्रचतुष्टयमर्घसिद्ध्यर्थं पूर्वोक्तविधिना कुर्यात्॥ तिलैर्युक्तं पात्र
चतुष्टयं यदत्र पितृवर्गे चत्वारो ब्राह्मणा एव द्विजाः॥ विश्वेदेवे द्वौ स्थितौ देव॥ तत्र प्रेतपात्रोद
कं किंचिद्वशेषं त्रिधा विभज्य पितृपात्रेषु सेचयेत्॥ ये समानाः समनस इति द्वाभ्यां मंत्राभ्यां
॥शेषं विश्वेदेवावाहनादि विसर्जनांतं पूर्ववत्पार्वणवदाचरेत्॥ प्रेतार्घपात्रावशिष्टोदके
न प्रेतस्थाने ब्राह्मणहस्तेऽर्घं दद्यात् शेषमेकोद्दिष्टवत्समापयेत्॥ पित्र्येषु त्रिषु पार्वणवत्

थोसपिंडता इति। मनुवचनं। पिता यस्य तु वृत्तः स्याज्जीवेच्चापि पितामहः। पितुः
स नाम संकीर्त्य कीर्तयेत्प्रपितामहमिति। तदपि शब्दप्रयोगनियमाय। न पिंडदपदाना
र्थं कथं। प्रियमाणे च पितरि पूर्वेषामेव निर्वपेत्। पिता यस्य प्रेतः स्याज्जीवेच्चापि पिता
महः। सोपि पूर्वेषामेव निर्वपेदित्यस्य च यः। पक्षद्वये कथं निर्वपेदित्याह। पितुः स नाम
संकीर्त्य कीर्तयेत्प्रपितामहमिति। आचारग्रहणेन सर्वत्र पितृभ्यः पितामहेभ्यः प्रपि
तामहेभ्यश्च इत्सेवं प्रयोगो न पुनः कदाचिदपि पितामहस्य प्रपितामहस्य प्रपितामहस्य
चादित्वे च वृद्धप्रपितामहस्य न तु पितुर्नामेति [illegible]। अतश्च पित्रादिशब्दानां सं
धिवचनत्वात्। प्रियमाणे पितरि पितुः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यश्च इति।
पितामहे प्रियमाणे पितामहस्य पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यश्चेत्यादिः। अत
श्च पिंडपितृयज्ञेष्वपि धेतां पितर इत्यादिमंत्राणामूहो न भवति। यदपि विष्णुवचनं।
यस्य पिता प्रेतः स्यात्स पितुः पिंडं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यादि
ति। तस्याप्ययमर्थः। पितामहे प्रियमाणे प्रेते च पितरि पितुरेकं पिंडमेकोद्दिष्टविधि
नाविधाय पितुर्यः पितामहस्ततः पराभ्यां द्वाभ्यां दद्यादिति। पितामहस्त्वात्मनः प्रपि
तामहः संप्रदानभूतः स्थित एवेति। प्रपितामहात्पराभ्यां द्वाभ्यां च दद्यादिति।

५७ शब्दप्रयोगनियमस्य पूर्वोक्तत्वात्। एवं गोत्रापहरणादिह तस्यापि सपिंडीकरणाभावो वे
दितव्यः। यथाह कात्यायनः। ब्राह्मणादिहृते नास्ते पत्नीते संगवर्जिते। सुकृतान्नं मतेदे
देयं पेभ्यए वददास्य सावित्ति। गोत्रापहरणादिहृतस्य पितुः सपिंडीकरणासंभवेन मुख्ये
ष्वपि तामहादिभ्यः पार्वणविधानमनुपपन्नमिति सपिंडीकरणाभावो वगम्यते। मातुः
पिंडदाना गोत्रेवि प्रतिपत्तिर्भर्त्तृगोत्रेण पितृगोत्रेणवा दातव्यमिति। उभयत्र वचनानि दृ
श्यन्ते। स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे। स्वामिगोत्रेण कर्त्तव्या तस्याः पिंडोद
कक्रिया। इत्यादि भर्त्तृगोत्रविषयवचनं। पितृगोत्रसमुत्पन्ने कुर्यात्स्वगोत्रतः। जन्म
न्येव विपत्तौ च नारीणां पैतृकं कुलं। इत्यादि पितृगोत्रविषयं वचनं। एवं विप्रतिपत्तौ आ राम
सुरादि विवाहेषु पुत्रिकाकरणे च पितृगोत्रमेवात्र तत्र गौ ~~मविषयं वचनं। एवं वि~~
प्रतिपत्तौ आसुरादि। तत्र विशेष वचनाद्दानस्या निवृत्तेश्च। ब्राह्मादिषु विवाहेषु त्री
हियववत्। बृहद्रथन्तरवद्विकल्प एव मत्त्वा च। येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यतीति वचनाद्यापरंपरायातसमाचारेण व्यव
स्था। एवंविधविषयव्यतिरेकेणास्य वचनस्य विषयान्तराभावात्। मत्र पुनः शा
स्त्रतोनवस्था व्यवस्थानोपायो। एवंविध। विषयव्यतिरेकेणास्य वचनस्य विषयो

तदभावात्॥ यत्र पुनः शास्त्रतो न्यवस्थानापाचारतस्तत्रात्मनस्तुष्टिरेवेति वचनात्
दात्मनस्तुष्टिरेव व्यवस्थापिका। यथा गर्भिणीमेध्येवेवार्द्ध इति मातुः सपिण्डीकरणे पितृर-
ह्रानीव वाक्यानि दृश्यन्ते॥ तत्र पितामह्यादिभिः सार्द्धं सपिण्डीकरणं स्मृतं तथा भर्त्रापि भा-
र्यायाः स्वमात्रादिभिः सहैवा भवेदिति। तत्र पितामह्यादिभिः सह सपिण्डीकरणं कर्त्तव्य-
मिति येनोशनसिराह॥ अपुत्रायां मृतायां तु पतिः कुर्यात् सपिण्डताम्। श्वश्र्वादिभिः सहैवास्याः
सपिण्डीकरणं भवेदिति। पत्न्याः सह सपिण्डीकरणं यम आह। यस्यां चैकेन कर्त्तव्यं सपिण्डी-
करणं स्त्रियाः। सामन्तापि हि तेनैकाङ्गता मन्त्रानुतिन्नैरिति। उशनसा तु मातामहेन सा-
पिण्ड्यमुक्तं पितुः पितामहे यद्वत् पूर्णे संवत्सरे सुतैः। मातुर्मातामहे तद्वदेषा कार्या सपिण्डता
। तथा पितापितामहे योज्यः पूर्णे संवत्सरे सुतैः। माता मातामहे तद्वि स्याह भगवानुशि-
नः इति॥ एवं विधेषु वचनेषु सत्सु अपुत्रायां भार्यायां प्रमीतायां भर्त्ता स्वमात्रैव सा-
पिण्ड्यं कुर्यात्। अन्वारोहणे तु पुत्रः स्वपित्रैव मातुः सापिण्ड्यं कुर्यात्। आसुरादिविवाहो-
सन्नः पुत्रिकासुतस्य मातामहेनैव। ब्राह्मादिविवाहोसन्नः पित्रा मातामहेन पिताम-
ह्या वा विकल्पेन कुर्यात्। अत्रापि ये दिनि यतो वंशसमाचारस्तदा तथैव कुर्यात्।
वंशसमाचारेऽप्यनियतश्चेत्तदात्मनस्तुष्टिरेवेति॥ यथा स्वरुचि कुर्यादिति।

५८ अत्र येन केनचित् मातुः सापिंड्येपि मन्त्रान्वष्टकादिषु मातृश्राद्धं पृथग्विहितं। अन्वष्टकासु च
वृद्धौ च गयायां च क्षयेऽहनि। मातुः श्राद्धं पृथक्कार्यम् अन्यत्र पतिना सहेति। तत्र पितामह्यादिभिरे
व पार्वणं कर्तव्यं। अन्यत्र पतिना सहेति पतिसापिंड्ये तद्भागित्वात्। मातामहसापिंड्ये तद्
भागित्वान्नैव सह। यथाह शातातपः। एकमूर्तित्वमायाति सपिंडीकरणे कृते। पत्नी प
तिपितॄणां च तस्मादंशेषु भागिनी। एवं च सति मातामहेन मातुः सापिंड्ये मातामहश्राद्धेपि
तच्छ्राद्धं वांनिसमेव। पत्सापितामह्यां वा मातुः सापिंड्ये मातामहश्राद्धं न निरस्यते अभ्यु
दयः। अलं तेन प्रसंगेनेति निर्णयः॥ ॥अर्वाक्सपिंडीकरणं यस्य संवत्सराद्भवेत्॥
तस्याप्यन्नं सोदकुंभं दद्यात्संवत्सरं द्विजे॥ ॥संवत्सरादर्वाक्सपिंडीकरणं यस्य कृतं त राम
स्य कृते प्रतिदिनं संप्रतिमासं वा यावत्संवत्सरान्तमनुसारेण अन्नमुदकुंभसहितं ब्राह्म
णाय दद्यात्। अर्वाक्संवत्सरादिति वदता सपिंडीकरणं संवत्सरे पूर्णे वा प्राग्वा इति
द्योतयथाहाश्वलायनः। अथ सपिंडीकरणं संवत्सरान्ते द्वादशाहे वेति। कात्यायनोपि॥ ततः
संवत्सरे पूर्णे सपिंडीकरणं त्रिपक्षे वा यदहर्वा वृद्धिरापद्येत इति द्वादशाहे त्रिपक्षे वृद्धौ प्रा
प्तौ संवत्सरे चेति चत्वारः पक्षा दर्शिताः। तत्र द्वादशाहे पितुः सपिंडीकरणं साग्निकेन का
र्यं। सपिंडीकरणं विना पिंडपितृयज्ञासिद्धेः। साग्निकस्यैव यदा कर्ता। अतोच अग्निमान्

वेत्॥ द्वादशाहे तदा कार्यं सपिंडीकरणं पितुरिति वचनात्॥ निरग्निकस्य त्रिपक्षे वा
द्विमासे संवत्सरे वा कुर्यात्॥ यद्यप्राङ्गेऽब्दस्य सपिंडीकरणं तदा षोडश श्राद्धा
नि कृत्वा सपिंडीकरणं कार्यं। उत सपिंडीकरणं कृत्वा तानि स्वकाले कर्तव्यानीति
संग्रहः। उभयथा वचननिर्देशात्॥ श्राद्धानि षोडशादत्वा न तु कुर्यात्सपिंडनं। श्रा
द्धानि षोडशापाद्य विदधीत सपिंडनं। इति षोडश श्राद्धानि च। द्वादशाहस्थानं तु कुर्या
त्सपिंडनं। श्राद्धानि षोडशापाद्य विदधीत सपिंडनं। इति षोडश श्राद्धानि च। द्वादशा
हे त्रिपक्षे च षण्मासे मासिकेऽब्दिके। श्राद्धानि षोडशैतानि संस्मृतानि मनीषिभि
रिति दर्शितानि। तथा॥ यस्यापि संवत्सरादर्वाक् सपिंडीकरणं भवेत्। मासिकं चो
दकुंभं च देयं तस्यापि वत्सरमिति। तत्र सपिंडीकरणं कृत्वा स्वकाले एतानि कर्तव्या
नीति प्रथमः कल्पः। अप्राप्तकालत्वेन प्रागनधिकारात्। यदपि वचनं षोडशश्रा
द्धानि कृत्वैव सपिंडीकरणं संवत्सरात्प्रागपि कर्तव्यमिति। सोपमापत्कल्पः। यदा त्वा
पत्कल्पत्वेन प्राक् सपिंडीकरणात्तत् श्राद्धानि करोति तदैकोद्दिष्टविधानेन कुर्यात्॥
यदा तु मुख्यकल्पत्वेन स्वकाल एव करोति तदाब्दिकं श्राद्धं यथा करोति पार्वणमे
कोद्दिष्टं वा तथा मासिकानि कुर्यात्। सपिंडीकरणादर्वाक् कुर्वन् श्राद्धानि षोडश॥
एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु॥ सपिंडीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः॥

मसदंयो यथा कुर्यात्तथा कुर्यात्स्वशक्त्यैकेनैव वृत्ते मालं ॥ न सर्वैः कर्त्तव्यं ॥ न वस्त्राद्धस
पिंडत्वं श्राद्धान्यपि च षोडश ॥ एकोनेनत्तु कार्याणि संविभक्तधनेष्वपीति स्मरणात् ॥
दृष्टं प्रेतश्राद्धसहितं सपिंडीकरणमसंन्यासिनां पुत्रादिभिर्नियमेन कार्यं । प्रेतत्वविमो
कार्थत्वात् । संन्यासिनां तु न कर्त्तव्यं । यथाहोशना ॥ एकोद्दिष्टं न कुर्वीत यतीनां चैव स
र्वदा । अहन्येकादशे प्राप्ते पार्वणं त्वभिधीयते ॥ सपिंडीकरणं तेषां न कर्त्तव्यं सुतादि
भिः । त्रिदंडग्रहणादेव प्रेतत्वं नैव जायत इति । तेषां पुत्रासंनिधाने येन सगोत्रादिना
दाहसंस्कारः कृतस्तेनैव दशाहात्कर्म कर्त्तव्यं । असगोत्रः सगोत्रो वा यदि स्त्री यदि
वा पुमान् ॥ प्रथमेहनि यो दद्यात्स दशाहं समापयेदिति स्मरणात् । शूद्राणामप्येतत्क दाम
र्त्तव्यममंत्रकं द्वादशेहनि ॥ एवं सपिंडीकरणं मंत्रवर्जं शूद्राणां द्वादशेहनीति विष्णुस्मर
णात् ॥ सपिंडीकरणादूर्ध्वं सांवत्सरिकपार्वणादीनि पुनः स्मृतियमेनैव कार्याणि ॥
अन्येषामनियतानि । एकोद्दिष्टकालानाह ॥ ॥ मृतेहनि तु कर्त्तव्यं प्रतिमासं तु सं
वत्सरं । प्रतिसंवत्सरं चैवमाद्यमेकादशेहनि ॥ ॥ मृतेहनि प्रतिमासं संवत्सरं या
वत् एकोद्दिष्टं कार्यं । सपिंडीकरणादूर्ध्वं प्रतिसंवत्सरमेव चैकोद्दिष्टमेव कार्यं ।
अद्यं सर्वैकोद्दिष्टप्रकृतिभूतं । मकोद्दिष्टमेकादशेहनि । मृतदिवसापरिज्ञाने तु

तच्छ्रवणाद्दिवसे ऽमावास्यायां वा कर्त्तव्यमिति । अपरिज्ञाते मृताहनि अमावास्यायां श्रव
णादिवसे वेति स्मरणात् । अमामावास्यायामिति निगमनं मासस्य बोधित्वाऽमावास्यायां
मिति प्रवासस्य वासरे वा ज्ञेयं । वासदिवसे ज्ञेयं तन्मासे दुःक्षये पि वा ।। इति स्मरणात् मृते
ऽहनि सत्र आहिताग्ने विशेषमाह कात्यायनः ।। ऊर्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृताहन्येव तत्
भवेत् ।। अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मनः इति । त्रिपक्षादर्वाक् यत्र तत्कर्म
त दाहदिवसादारभ्य आहिताग्नेः कार्यं । त्रिपक्षादूर्ध्वं यदा श्राद्धं तन्मरणदिवस एव
स्यादिति ।। अनाहिताग्नेस्तु सर्वं मृताह एव । आद्यमेकोदृष्टो ऽहनीति स्वाशौचापगमे
णामिति केचित् । सुविना कर्म कर्त्तव्यमिति । शुद्धेरनन्तरं गतावशौचापगमे द
ति सामान्येनोपक्रम्य एकोद्दिष्टस्य विष्णुना विहितत्वाच्चेनदयुक्तं ।। एकादशेन्हि प
श्चाद्धत्तव्यामानुमुदाहृतां ।। चतुरर्थमपि वसमेनां सूनकेचयत्पयथ्यगाविति पैठी
नसिस्मरणविरोधात् ।। आद्यश्राद्धमशुद्धोपि कुर्यादेकोदशे हनि । कर्त्तुस्तात्कालि
की शुद्धिरशुद्धः पुनरेनसत्रतिशौ स्ववचनेविरोधाच्च सामान्योपक्रमं । विष्णुवचनं द
शाहाशौचविषयमपि घटन्ते इति ।। प्रतिसंवत्सरं चैव मिति । प्रतिसंवत्सरं मृते ऽहन्येव
कोद्दिष्टमुपदिष्टं योगीश्वरेण । तथा च स्मृत्यन्तरं ।। वर्षे वर्षे च कर्त्तव्या मातापित्रो

मेऽस्मिन्मापिंडः सुतः पिंडो न स्मिंना। एकोद्दिष्टं हि कर्तव्यं रसेन मृतेऽहनि॥ सपिंडीकरणादूर्ध्वं माता
पित्रोर्न पार्वणमिति॥ छंदोगाः पुनरेवं व्यवस्थापयंति। अमावास्यायां भाद्रपदकृष्णपक्षे च नाम
नाहपार्वणं। अन्यत्र मृताहे एकोद्दिष्टमेवेति। अमायां च पक्षे पापस्यापेन पक्षे यथावपुनः। पार्व
णं न त्र कर्तव्यं नैकोद्दिष्टं कदाचनेति स्मरणात्। एतदपि नाद्रियंते बुधाः। अनिश्चितमूलेना
नेन निश्चितमूलानां बहूनां क्षयाहमात्रपार्वणविषयाणां वचनानाममावास्यापक्षेऽन पक्षम
ताहविषयत्वेनातिसंकोचस्यायुक्तत्वात्। सामान्यवचनानर्थक्याच्च। तत्र हि सामान्यवचन
स्य विशेषवचनेनोपसंहारो यत्र सामान्यविशेषसंबंधज्ञानेन वचनद्वयमर्थवत्। यथा स
मद्रा माधेनीरनुब्रूयादित्यनारभ्याधीतस्याविकृतिमात्रविषयस्य सामिधेनीसप्तदशवाक्यस्य
सामिधेनीलक्षणद्वारसंबंधेनार्थवत्ता मित्रविंदादिप्रकरणपठितेन सास्वदशवाक्येन मि
त्रविंदाद्यधिकारापूर्वसंबंधबोधकत्वेनार्थवत्ता मित्रविंदादिप्रकरणे उपसंहारः। इह तु
क्षयोर्मृताहमात्रविषयत्वेनार्थवत्त्वेनेति। अतोऽत्र पाक्षिकएकोद्दिष्टनिवृत्तिफलतया पार्व
णनियमविधानमयुक्तं। न च पार्वणवचनानां मातापित्रोः क्षयाहविषयत्वेन। एकोद्दिष्ट
वचनानां च तदन्यक्षयाहविषयत्वेन व्यवस्था युक्ता। उभयत्रापि मातापित्रोरन्यत्र ग्रहण
स्याविद्यमानत्वात्। सपिंडीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः। मातापित्रोः पृथक्कार्यमेको

६१ ष्टिमन्नेहनीति। तथा। आपाद्य सह पिंडत्वमौरसो विधिवत्सुतः। कुर्वीत दर्शवच्छ्राद्धं मा
तापित्रोः क्षयेहनीति। यदपि केचिदेकवचनेन मातापित्रोः क्षयाहे सांवत्सरिकः पार्वणं कुर्यात्॥
नित्यमेकोद्दिष्टमिति। वत्सरे वत्सरे सुतः कुर्यात्सार्वलौक्यो तिमोऽन्यद्विजः। पित्रोरनग्निम
न्नधीरेकोद्दिष्टं मृतेहनीति। सुमन्तुस्मरणात्। तदपि सप्रतिपक्षत्वादुपेक्षणीयं। वह्
नयस्तु पे विप्रा ये चैकाग्नयः परे च। तेषां सपिंडनादूर्ध्वमेकोद्दिष्टं न पार्वणमिति स्मर
णात्॥ तत्रैवं निर्णयः। संन्यासिनो क्षयाहे सुतेन पार्वणमेव कर्तव्यं॥ एकोद्दिष्टं यतेर्ना
स्तीति दंडग्रहणाद्दिह। सपिंडीकरणाभावान्न पार्वणं तस्य सर्वदेति प्रचेतः स्मरणात्।
अमावास्याक्षयाहे प्रेतपक्षक्षयाहे च पार्वणमेव। अमावस्याक्षयो यस्य प्रेतपक्षोथवा
पुनः। इत्यादिवचनस्योक्तनीत्या नियमपरत्वात्। अन्यत्र क्षयाहे पार्वणैकोद्दिष्टयो राम
र्व्रीहियववद्विकल्प एव। तत्रापि वशासमाचारस्यैव स्वशाखायां सत्यां व्यवस्थितेः। अप्रस
क्तस्यामेच्छस्य अलमतिप्रसंगेन॥ ॥ नित्यश्राद्धव्यतिरिक्तसर्वश्राद्धशेषमिदमभिधीय
ते॥ ॥ पिंडांस्तु गोजविप्रेभ्यो दद्यादग्नौ जलेपि वा। प्रक्षिपेद्वाप्सु विप्रेषु द्विजोच्छिष्टं न मा
र्जयेत्॥ ॥ पूर्वं दत्तानां पिंडानामेव पिंडस्य वा प्रतिपत्तिरियं। गवे। अजाय ब्राह्मणा
य वा तदर्थिने पिंडान्दद्यात्। अग्नौ। अगाधे जले वा प्रक्षिपेत्। किंच। सत्सु विप्रेषु भोजन

देशावस्थितेषु द्विजेषु छिद्रं न मार्जयेन्नोद्वासयेदिति ॥ ॥अथ विशेषात्फलविशेषमाह ॥
॥ हविष्यान्नेन वै मासं पायसेन तु वत्सरं । मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥ ऐण
रौरववाराहशाशैर्मांसैर्यथाक्रमं । मासवृद्ध्याभितृप्यन्ति दत्तैरिह पितामहाः ॥ हविष्यैर
विर्योग्यैस्तिलव्रीह्यादि । यथाह मनुः ॥ तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा दत्तेन मासं प्री
यन्ते विधिवत्सिततरोत्तमामिति । तद्वदत्र हविष्यान्नेनेति मासं पितरस्तृप्यन्तीत्यनागतेनान्व
यः पायसेन गव्यपयः सिद्धेन संवत्सरं ॥ संवत्सरं तु गव्येन पयसा पायसेन तु इति स्मरणा
त् । मत्स्यो भक्ष्यः पाठीनादिस्तत्संबन्धि मात्स्यं । हारिणस्ताम्रमृगः । एणः कृष्णस्तयोरन्यस्ताम्रो
हरिण उच्यते । इत्यायुर्वेदस्मरणात् । तत्संबन्धि हारिणकं ॥ अविः उरभ्रस्तत्संबन्धि और
भ्रं । शाकुनं भक्ष्यपक्षिसंबन्धि । अजः छागस्तदीयं छागं । पृषच्चित्रमृगस्तज्जं पार्षतं । रौ
रवस्य रौरवं शाशं । एभिर्मांसैः पितृभ्यो दत्तैरिह हविष्यान्नेन वै मासं इत्यतः अनुवृत्तेर्यथा
क्रमं एकैकमासवृद्ध्या पितरस्तृप्यन्ति ॥ ॥ किंच ॥ खड्गामिषं महाशल्कं मधु मुन्यन्नमे
व च ॥ लोहामिषं कालशाकं मांसं वार्ध्रीणसस्य च ॥ यद्ददाति गयास्थश्च सर्वमानन्त्यम
श्नुते ॥ तथा वर्षात्रयोदश्यां मघासु च विशेषतः ॥ ॥ खड्गो गण्डकस्तस्य मांसं । महाश
ल्को मत्स्यभेदः । मधु क्षौद्रं । मुन्यन्नं सर्वमारण्यकं नीवारादि । लोहो रक्तच्छागस्तद

अर्बुदः पर्वतविशेषो दक्षिणदेशे प्रसिद्धः ॥ ५ एतन्नाम्नी नदी रावतीयं सप्तपर्थे द्वितीया ५

६२ निषं लोहामिषं । कालशाकं शाकविशेषः । वाध्रीणसः श्वेतच्छागस्तदामिषं । त्रिःपिन
स्त्विन्द्रियक्षीणः श्वेतावृद्धस्तनापतिः । वाध्रीणस इति प्रोक्तो याज्ञिकैः पितृकर्मणीति
। याज्ञिकप्रसिद्धेः । त्रिपिबः कर्णौ जिह्वा च यस्य जलं स्पृशन्ति त्रिभिः पिबतीति स त्रिपिबः ।
तस्य वाध्रीणसस्य मांसं यच्च दत्तं । गयायां स्वयं पक्वे न्विशाकादिकमपि गयायां सर्वाद
दानं च शब्दाद्गंगाद्वारादिषु च ॥ गंगाद्वारे प्रयागे च पुष्करे नैमिषेर्बुदे । संनिहत्यां
गयायां च श्राद्धमक्षयतामश्नुते ॥ इति । अनंतसमश्नुत इति अनंतफलहेतुत्वं प्राप्नोति ।
आनंत्यमश्नुत इति प्रत्येकमभिसंबध्यते । तथा वर्षासु त्रयोदश्यां भाद्रपदे हस्तत्रयो राम
दश्यां विशेषतो मघायुक्तायां यत्किंचिद्दीयते तत्सर्वमानंत्यमश्नुत इति गतेन संबं
धः । अत्र यद्यपि मुन्यन्नमांसमध्वादीनि सर्वेषां सामान्येन श्राद्धयोग्यानि दर्शि
तानि । तथापि लघुपुलस्त्योक्तव्यवस्थाचरणीया ॥ मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्ष
त्रियावैश्ययोः । मधुप्रदानं शूद्रस्य सर्वेषां चाविरोधि यत् ॥ अस्यार्थः । मुन्यन्नं नीवा
रादि यत्तच्छ्राद्धयोग्यमुक्तं तद्ब्राह्मणस्य प्रधानं समग्रफलदं । पक्वमांसं तत्क्षत्रियवै
श्ययोः प्रधानं । एवं शूद्रस्य मुक्तं मधु शूद्रस्य । एतत्त्रितयव्यतिरिक्तं यदविरोधि यत् ।
अप्रतिषिद्धं वास्तुकादि यच्च विहितं हविष्यं कालशाकादि तत्सर्वेषां समग्रफलद ६२

मिति। तिथिविशेषात्फलविशेषमाह॥ ॥कन्यां वेदिनश्च पशून्वै सत्सुतानपि। द्यूतं कृषिं
वाणिज्यं च द्विशफैकशफांस्तथा॥ ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरूप्ये सकुप्यके॥ ज्ञातिश्रै-
ष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा॥ प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीं। शस्त्रे-
ण तु हता ये वै तेभ्यस्तत्र प्रदीयते॥ ॥कन्या स्वरूपलावण्यशीलवती कन्या। वेदिनो ज्ञाता-
रो बुद्धिरूपलक्षणमेतत्। पशवः क्षुद्राः अजादयः। सत्सुताः सन्मार्गवर्तिनः पुत्राः
। द्यूतं द्यूतविजयः। कृषिः कृषिफलं। वाणिज्यं वाणिज्यलाभः। द्विशफाः गवादयः। एकश-
फा अश्वादयः। ब्रह्मवर्चस्विनः पुत्रा वेदाध्ययनतदर्थानुष्ठानजन्यादिजनितं तेजो ब्रह्म-
वर्चसं तद्वन्तः। स्वर्णरूप्ये हेमरजते। तद्व्यतिरिक्तं त्रपुसीसकादि कुप्यकं। ज्ञातिश्रै-
ज्ञातिभ्य उत्कृष्टत्वं। सर्वकामाः काम्यन्त इति कामाः स्व[illegible]पुत्रपश्वादयः। इत्येतानि कृ-
त्यादीनि चतुर्दश फलानि कृष्णपक्षस्य प्रतिपत्प्रभृतिष्वमावास्यापर्यन्तासु चतुर्दशी-
वर्जितासु तिथिषु श्राद्धदो यथाक्रममाप्नोति। ये केचन शस्त्रेण हतास्तेभ्यः कृष्णप-
क्षचतुर्दश्यामेकोद्दिष्टविधानेन श्राद्धं दद्यात्। यदि शस्त्रेणादिहता न भवन्ति। समस्व-
मागतस्यापि पितुः शस्त्रहतस्य वै। एकोद्दिष्टं सुतैः कार्यं चतुर्दश्यां महालये। इति स्म-
रणात्। समन्वमागतस्य सपिण्डीकृतस्य महालये भाद्रपदस्य कृष्णपक्षे चतुर्दश्यां शास्त्र

६३ हतस्यैव नान्यस्येति नियम्यते न पुनः शस्त्रहतस्य चतुर्दश्यामेवेति। अतश्च पक्षान्तरादौ
शस्त्रहतस्यापि यथाप्राप्तमेव श्राद्धं। न च माघ्यादिवत् सपिंडनादूर्ध्वं चायं विधिरिति मन्तव्यं। प्रौ
ष्ठपद्यामपरपक्षे मासि मासि चैवमिति शेषो नक्षत्रगणात्। नक्षत्रविशेषात् फलविशेष
माह।। ॥स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा॥ पुत्रा न ~~[illegible]~~ कस्मर
णात्। नक्षत्रविशेषात् फलविशेषमाह। ॥स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं त
था॥ पुत्रं श्रैष्ठ्यं ससौभाग्यं समृद्धिं मुख्यतां शुभं॥ प्रवृत्तचक्रतां चैव वाणिज्य
प्रभृतीस्तथा॥ अरोगित्वं यशो वीतशोकतां परमां गतिं। धनं वेदान् भिषक्सिद्धिं कु राम
प्यं गा अप्यजाविकं॥ अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति॥ ॥कृत्तिका
दिभरण्यंतं स कामानाप्नुयादिमान्॥ आस्तिकः श्रद्धानश्च व्यपेतमदमत्सरः॥ ॥
कृत्तिकादिभरण्यंतं प्रतिनक्षत्रं यः श्राद्धं ददाति स यथाक्रमं स्वर्गादीनायुः
पर्यंतान् कामानाप्नोति यद्यास्तिकः श्रद्धानो व्यपेतमदमत्सरश्च भवति। यद्यास्ति
को विश्वासवान्। श्रद्धानः आदरातिशययुक्तः स्यात्। व्यपेतमदमत्सरः मदो ग
र्वः। मत्सरः ईर्ष्या ताभ्यां रहितः स्वर्गो निरतिशयसुखं। अपत्यमविशेषेणोक्तं। ओ
जः आत्मशक्त्यतिशयः। शौर्यं निर्भयत्वं। क्षेत्रं फलवत्। बलं शारीरं॥ पुत्रो गुणवान्॥ ६३

श्रैष्ठ्यंज्ञातिषुसौभाग्यंजनप्रियता।समृद्धिर्धनादेः।मुख्यताअग्र्यता।शुभंसामान्ये
न।प्रवृत्तचक्रता।अप्रतिहताज्ञता।वाणिज्यप्रभृतीनिवाणिज्यपशुपालकुसीदगोरक्षा
।अरोगित्वमनामयत्वं।यशः।प्रख्यातिः।वीतशोकताइष्टवियोगादिनिमित्तदुःखा
भावः।परमागतिः।ब्रह्मलोकाप्तिः।धनंसर्ववेदि।वेदाःऋग्वेदादयः।भिषक्सिद्धिः
औषधफलावाप्तिः।कुप्यंसुवर्णरजतव्यतिरिक्तंताम्रादि।गावःप्रसिद्धाः।अजा
अविपशवः।अश्वाश्च।आयुर्दीर्घजीवनं।मासवृद्ध्यापितृप्यन्तिदत्तैरिहपितामहाः
स्यनेनश्राद्धेनपितॄणांतृप्तिर्भवतीत्येतदनुपपन्नं।प्राणिनांस्वकृतशुभाशुभकर्म
वशेनस्वर्गनरकादिगतानांमनुष्याणांपुत्रादिदत्तैरन्नपानादिभिस्तृप्त्यसंभवात्
संभवेपिस्वयमात्मनामप्यनीशानाःस्वर्गादिफलंकथंप्रयच्छन्तीत्यतआह॥ ॥
वसुरुद्रादितिसुताःपितरःश्राद्धदेवताः।प्रीणयन्तिमनुष्याणांपितॄन्श्राद्धेन
तर्पिताः।आयुःप्रजांधनंविद्यांस्वर्गंमोक्षंसुखानिच।प्रयच्छन्तितथाराज्यंप्रीता
नृणांपितामहाः॥ ॥नह्यत्रदेवदत्तादयएवश्राद्धकर्मणिसंप्रदानभूताःपित्रादि
शब्दैरुच्यन्ते।किंत्वधिष्ठातृवस्वादिदेवतासहिताएवयथादेवदत्तादिशब्दैर्नशरी
रमात्रंनाप्यात्ममात्रं।किंतुशरीरविशिष्टाआत्मानउच्यन्ते॥एवमधिष्ठातृदेव

६४ तासहिता एव देवदत्तादयः पित्रादिशब्दैरुच्यन्ते॥ अतश्चाधिष्ठातृदेवता वस्वादयः पु
त्रादिभिर्दत्तेनान्नपानादिना तृप्ताः सन्तस्तान्पित्रादीन्देवदत्तादीं स्तर्पयन्ति। कर्तॄंश्च पु
त्रादीन्फलेन संयोजयन्ति। यथा माता गर्भपोषणाय दत्तेन दोहदान्नपानादिना स्व
यमुपभुक्तेन प्रीता सती स्वजठरगतमपत्यं तर्पयति। दोहदप्रदानादिप्रदायिनश्च प्र
त्युपकाररूपफलेन संयोजयति। तद्वद्वसवोरुद्रादितिसुताः श्राद्धदेवताः॥ ते पितरः
पितृपितामहप्रपितामहशब्दवाच्याः। तथा न केवलं देवदत्तादय एव श्राद्धदेवताः
श्राद्धकर्मणि संप्रदानभूताः किंतु मनुष्याणां पितॄन्देवदत्तादीन्स्वयं श्राद्धेन तत्
पिता स्तर्पयन्ति। ज्ञानशक्त्यतिशययोगेन। किंच न केवलं पितॄंस्तर्पयन्ति। अपितु श्रा राम
द्धकारिणः। आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च॥ प्रयच्छन्ति तथा राज्यं प्रीता
नृणां पितामहाः॥ चकारात्तत्तत् — स्तोक्तमन्यदपि फलं स्वयं प्रीताः पितामहा वस्वा
दयः प्रयच्छन्ति॥ ॥इति श्राद्धप्रकरणं दशमं समाप्तं॥ ॥इष्टादृष्टफलसाधना
नि कर्माण्यभिहितान्यभिधास्यन्ते च। तेषां स्वरूपनिष्पत्ति फलसाधनत्वे च। विघ्नेन
भवतोऽस्य विघ्नार्थे कर्म विधास्यन्विघ्नस्य कारकं ज्ञापकं चाह॥ ॥विनायकः
कर्मविघ्नसिद्ध्यर्थं विनियोजित्यादिना उभयहेतुपरिज्ञानार्थं विघ्नस्य प्राग्भावपरि

जानाति। विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः॥ गणानामाधिपत्ये च रुद्रेण ब्रह्म
णा तथा॥ ॥विनायको विघ्नराजः पुरुषार्थसाधनानां कर्मणां विघ्नसिद्ध्यर्थं स्वकरू
पसाधनस्य विघ्नसिद्ध्ये विनियोजितः नियुक्तः। रुद्रेण ब्रह्मणा च कारादिसुना
गणानां पुष्पदन्तप्रभृतीनामाधिपत्ये स्वाम्ये च॥ ॥पूर्वं विघ्नकारकहेतुमुक्त्वाऽ
धुना ज्ञापकं केतुप्रदर्शनार्थमाह। तेनोपसृष्टो यस्तस्य लक्षणमभिनिबोधत। स्व
प्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति॥ काषायवाससश्चैव क्रव्यादांश्चाधिरोहति
॥अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते। व्रजन्नपि तथात्मानं मन्यतेऽनुगतं परैः॥ ॥
तेन विनायकेनोपसृष्टो गृहीतो यस्तस्य लक्षणानि ज्ञापकानि निबोधत जानीध्वं।
हे मुनयः पुनर्मुनीनां प्रसवमर्शः शान्तिप्रकरणप्रावेभार्थं। स्वप्ने स्वप्नावस्थायां
जलमत्यर्थमवगाहते। स्रोतसाक्षिप्यते निमज्जति वा। मुण्डितशिरसः पुरुषान्पश्य
ति॥ कषायवाससो रक्तनीलादिवस्त्रप्रावरणांश्च। क्रव्यादनः आममांसाशि
नः पक्षिणो गृध्रादीन्मृगांश्च व्याघ्रादीनधिरोहति। अन्त्यजैश्चाण्डालादिभिः गर्द
भैः खरैः। उष्ट्रैः क्रमेलकैः सह परिवृतस्तिष्ठति। व्रजन्गच्छन्नात्मानं परैः शत्रुभिः
पृष्ठतो धावद्भिरनुगतं म्रियमाणमभिभूतमात्मानं मन्यते॥ ॥एवं स्वप्नदर्श

६५ नाम्यकृत्काप्रस्यसालिंगानाह ॥ ॥ विमनाविफलारंभः संसीदत्यनिमित्ततः ॥ तेनो
पसृष्टो लभते न राज्यं राजनंदनः ॥ कुमारी न च भर्त्तारं मपत्यं गर्भमंगना ॥ आचार्य
त्वं श्रोत्रियश्च श्रमं शिष्योध्ययनं तथा ॥ वणिग्लाभं न चाप्नोति कृषिं चापि कृषीवलः ॥ वि
मना विक्षिप्तचित्तः ॥ विफलः प्रारंभो यस्य स विफलारंभः [illegible] कस्मिन्फलमाप्नोति ॥
संसीदत्यनिमित्ततः विना कारणेन दीनचित्तो भवतीति ॥ राजनंदनो राजकुले जा
तः पुनः सौंदर्य शौर्य धैर्यादिगुणयुक्तोपि राज्यं न लभते ॥ कुमारी रूपलक्षणाभिजना
दिसंपन्नापि दुःखिता भर्त्तारं ॥ अंगनाः गर्भितापत्यं ॥ ऋतुमतो गर्भं ॥ श्रोत्रियः अध्ययनं तदर्थज्ञा
नेसत्यपि श्रोत्रियः आचार्यत्वं ॥ विनयाचारादियुक्तोपि शिष्योध्ययनं श्रवणं वान रप
लभते ॥ न लभत इति सर्वत्र संबध्यते ॥ वणिक्कुवणिज्योपजीवी तत्र कुशलोपि धा
न्यादिक्रयविक्रयादिषु लाभं कृषीवलः कर्षुकस्तत्रापियुक्तोपि कृषिफलं नाप्नोति
एवंयो यमाद्य स्याजीवति सतत्र निःफलारंभश्रांतेनापसृष्टो वेदितव्यः ॥ एवं कार
कत्राणिकहेतून् अभिधाय विघ्नोपशान्त्यर्थं कर्मविधानमाह ॥ ॥ स्नपनं तस्य कर्त्तव्यं
पुण्येह्नि विधिपूर्वकं ॥ गौरसर्षपकल्केन साज्येनोत्सादितस्य च ॥ सर्वौषधैः सर्वगं
धैर्विलिप्तशिरसस्तथा ॥ भद्रासनोपविष्टस्य स्वस्ति वाच्या द्विजाः शुभाः ॥ ॥

एतत्सपिंडीकरणमनंतरोक्तमेकोद्दिष्टं च ततः प्रागुक्तक्रियाऽपि मातुरपि कर्तव्या। एवं चर
ता पार्वणे मातुः श्राद्धं पृथगेव कर्तव्यमित्युक्तं भवति। अत्र प्रेतस्याब्दं पितुः पितामहविषयं केचि
द्वर्णयंति। तस्य त्रिंशत्तमभावेन सपिंडीकरणोत्तरकालं पिंडदानादिनिवृत्त्यापत्तेः। समनंत
रमतस्य तूत्तरत्र पिंडोदकदानानुवृत्तेरंतर्नाको न युक्तः। अत एवाह यमः। यः सपिंडीकृतं प्रे
तं पृथक्पिंडे नियोजयेत्। पितृनेवाशयेत्त्रपुनः प्रेतं नानिर्दिशोनः। इति सपिंडीकरणोत्तरका
लं प्रेतस्य श्राद्धादिप्रतिषेधो दृश्यते। स चानंतरमतस्य न भवति। अमावास्यादौ श्राद्धादि
विधानात्। सपिंडत्रयव्यापित्वं पंचमस्य पिंडद्वयव्यापित्वं षष्ठस्यैकपिंडव्यापित्वं समे विनि
वर्तत इति। पितृपात्रे च स्थितस्य तदापि पितृमुख्यत्वादसंनिवेशपक्षे घटते। नान्यथा। पितामहमु
ख्यत्वात् तस्मात्सिद्धं पात्रे पुत्रे प्रेतपात्रं प्रसेचयेत्। इति पितुः पितामहपात्रं पित्रादिपात्रेषु
प्रसेचयेदिति तदयुक्तं। न ह्यत्र पिंडसंयोजनमुत्तरत्र पिंडदानादिनिवृत्तिप्रयोजनं भवति।
अपि तु प्रेतत्वनिवृत्त्या पितृत्वप्राप्त्यर्थं। प्रेतत्वं च क्षुत्तृष्णोपजनिता संततदुःखानुभवाव
स्था। यथाह मार्कंडेयः। प्रेतलोके तु वसतिर्नृणां वर्षं प्रकीर्तिता॥ क्षुत्तृष्णे प्रत्यहं तत्र भ
वतां भृगुनंदन। इति। पितृत्वप्राप्तिश्च वस्वादिश्राद्धदेवतासंबंधः। प्राक्तनैकोद्दिष्टसहिते
न सपिंडीकरणेन प्रेतत्वनिवृत्त्या पितृत्वं प्राप्नोतीत्यवगम्यते। यस्यैतानि न दत्तानि स प्रेतस्था

५६ हानिषोडशश्राद्धेनत्वसुस्थिरं तस्य दत्तैश्राद्धशतैरपि। तथा। चतुरोनिर्वपेत्पिंडान्पूर्वंतेषु
समापयेत्। ततःप्रभृतिवैप्रेतःपितृसामान्यमश्नुतइतिवचनात्। यःसपिंडीकृतंप्रेतमि
स्तेनपिपृथगेकोद्दिष्टविधानेनपिंडदाननिषेधात्पार्वणविधानेनसहपिंडदानमव
गम्यते। तच्चसांवत्सरैकपाक्षिकैकोद्दिष्टविधानेनापाद्यते। यदपिपुनःप्रेतेननिर्दिष्टो
दितितदपिप्रेतश्राद्धेनोच्चारयेदपितुपितृशब्दमेवेत्येवमर्थंनत्वप्रकर्षगमनात्तत्रैवम
नुशब्दःपत्नीविशिष्टदुःखानुभाववस्थाप्रेतशब्देनरूपाभिहिताइत्युक्ते। योपिप्रमीत
मात्रेप्रेतशब्दप्रयोगः। सोपिभूतपूर्वगत्या। सपिंडतानुपुरुषेसप्तमेविनिवर्त्ततइतिच। राम
प्रथमस्यचतुर्थस्यापित्वाद्वितीयस्यपंचमस्यापित्वात्तृतीयस्यषष्ठस्यापितत्सप्तमेवि
निवर्त्ततइत्येवमेवघटते। अपिचाभिर्वाप्यपिंडान्वयेननसापिंडमव्यापकत्वात्। अपित्व
केशादिरानयवान्वयेनेत्युक्तेः। पितृशब्दस्यप्रेततनिवत्साप्राद्देवतानामुपगतेषुवस्वा
दिषुवर्त्ततइतिपितृपात्रेपिस्साविरुद्धं। तस्मादनंतरमनपात्रोदकस्यतिलंडस्पर्शपितृ
पात्रेषुतासिंडेषुचविभज्यसंसर्जनमितिस्थितं। आचार्यस्तुपरमतमेवोपन्यस्तवान्।
एतच्चापितुःसपिंडीकरणंपितामहादिषुत्रिषुप्रमीतेषुवेदितव्यं। पितरिप्रमीतेपितामहे
प्रपितामहेप्रपितामहेवाजीवतिसपिंडीकरणंनास्त्येव। व्युत्क्रमाच्चप्रमीतानांनैवका ५६

तस्य विनायकोपसृष्टस्य अनागतविनायकोपसर्गपरिहारार्थिनो वा स्नपनमभि
कर्त्तव्यं। पुराये स्वानुकूल्यादिनक्षत्रयुक्तेऽह्नि दिवसे न रात्रौ। विधिपूर्वकं शास्त्रो
क्तेतिकर्त्तव्यतासहितं स्नपनविधिनाह॥ ॥गौरसर्षपकल्केन साज्यापिष्टे
न साज्येन घृतलोलीकृतेनोत्सादितोस्य दुर्त्तितांगस्य। तथा सर्वौषधैः प्रियंगु
नागकेसरादिभिः। कुंकुमासीहरिद्रे द्वे मूर्वीशैलेयचंदनं॥ वचाकचौरमुस्तानि स
र्वौषध्यः प्रकीर्त्तिताः॥ सर्वगंधैश्चंदनागरुकस्तूरिकादिभिर्विलिप्तशिरस्कोवृषस्य
माणे भद्रासनोपविष्टस्य द्विजा ब्राह्मणाः शुभाः श्रुताध्ययनवृत्तसंपन्नाः
शोभनाः कृतयश्चत्वारः स्वस्ति भवंतो ब्रुवंत्विति वाच्याः। अस्मिन्समये ग
णेशः। विधिमार्गेण पुण्याहवाचनं कुर्यादित्यर्थः॥ ॥किंच॥ अश्वस्थाना
द्गजस्थानात्तथा वल्मीकात् संगमात् ह्रदात्॥ मृत्तिकां रोचनां गंधान् गुग्गुलं
चाप्सु निक्षिपेत्॥ या आहृता एकवर्णैश्चतुर्भिः कलशैर्ह्रदात्॥ चर्मण्यान
डुहे रक्ते स्थाप्यं भद्रासनं ततः॥ ॥अश्वस्थानगजस्थानवल्मीकसरित्
संगमाद्ध्रदेभ्य आहृताः पंचविधा मृत्तिका रोचना गंधाश्चंदनकुंकुमा
गरुप्रभृतयो गुग्गुलं च ता अप्सु निक्षिपेत्। या आपः आहृता एकवर्णैः

६६ समानवर्णैश्चतुर्भिः शुभैः कलशैरव्रणैरस्फुटितैरकालेर्युक्तैर्ह्रदादेर्व्याप्तैर्गतमाद्यैः॥ तत्र
श्चानडुहेन चर्मणा रक्तेन लोहितेन वर्णेन उत्तरलोम्नि प्राचीनग्रीवे भद्रासनोपरि समास्तीर्णे श्री
पर्णी॥ विनिर्मितस्थापनं। तत्त उक्तोदकुम्भैस्तैः कांगंधादिभिः सहितानूर्ध्वनादिपस्थो
परोभिनानतोस्तग्रामवेष्टितकंबानवेदनचद्वितानवारुतस्य शोभितांश्चतस्र पूर्वा
दिदिक्षु स्थापयित्वा चतुर्वासुलिखेररक्तपञ्चवर्णं स्वस्तिके लोहितमानडुहं चर्मोत्तर
लोमप्राचीनग्रीवमास्तीर्य तस्योपरि भद्रासनं प्रच्छादितमस्तनेस्थापयेत्। दिस्वस्ति च भद्रा
सनं॥ एतस्मिन्नुपविष्टस्य स्वस्तिवाच्यास्ततो द्विजाः॥ सहस्राक्षं शतधारमृषिभिः पाव
नं कृतं। तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते॥ स्वस्तिवाचनानन्तरं जीवत्पति राम
पुत्राभीरूपगुणशालिनीभिः कृतमङ्गलं। पूर्वोद्दिष्टेदेशावस्थितं कलशमादाय तेन
मन्त्रेण गुरुरभिषिञ्चेत्॥ सहस्राक्षमनेकशक्तिं केशतधारमनेकधनाहमृषिभिर्वृ
दकं पावनं पवित्रं कृतमुत्पादितं तेनोदकेन त्वां विनायकोपसृष्टं उपसर्गोपशान्तये अ
भिषिञ्चामि॥ पावमान्याश्चैताः आपस्त्वा पुनन्तु। तदनन्तरं दक्षिणदिग्देशावस्थितं
द्वितीयं कलशमादाय तेन मन्त्रेणाभिषिञ्चेत्॥ भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः।
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः॥ ॥भगं कल्याणं तुभ्यं वरुणो राजा भगं

सर्पावहस्पतिरिंद्रोवायुःसप्तर्षयश्चभगंददुरिति॥ ॥ततःपश्चिमदिक्कलशंतृतीयंक
लशमादायपातितेनमंत्रेणाभिषिंचेत्॥यत्तेकेशेषुदौर्भाग्यंसीमंतेयच्चमूर्द्धनि।ललाटेक
र्णयोरक्ष्णोरापस्तद्घ्नंतुसर्वदा॥ ॥तेनतवकेशेषुयद्दौर्भाग्यंकेशान्तसीमंते
मूर्द्धनिललाटेकर्णयोरक्ष्णोश्चतत्सर्वमापोदेवताःघ्नंतुशमयंतुसर्वदेति॥ ॥
ततःउत्तरदिक्कलशंचतुर्थंकलशमादायपूर्वोक्तैस्त्रिभिर्मंत्रैरभिषिंचेत्॥सर्वैर्मं
त्रैश्चतुर्थमितिलिंगात्॥ ॥स्नानस्यसार्षपंतैलंस्रुवेणौदुंबरेणतु॥जुहुयान्
मूर्द्धनिकुशान्सव्येनपरिगृह्यच॥ ॥उक्तेनप्रकारेणस्नानाभिषेकस्यमूर्द्धनिस
व्येनपाणिनागृहीतकुशानांतेहितंसार्षपंतैलमुदुंबरेणौदुंबरस्रवेणस्रुवेणव
क्ष्यमाणैर्मंत्रैर्जुहुयादाचार्यः॥ ॥मितश्चसंमितश्चैवतथाशालकटंकटौ॥कू
ष्मांडोराजपुत्रश्चेत्यंतेस्वाहासमन्वितैः॥नामभिर्बलिमंत्रैश्चनमस्कारसमन्वि
तैः॥ ॥मितसंमितादिभिर्विनायकनामभिःस्वाहाकारांतैःप्रणवाद्यैर्जुहुया
दितिगतेनसंबंधः॥स्वाहाकारयोगमात्रस्यचतुर्थीविभक्तिः।मंत्रश्च॥ॐमितायस्वा
हा॥ॐसंमितायस्वाहा॥ॐशालायस्वाहा॥ॐकटंकटायस्वाहा॥ॐकूष्मांडायस्वाहा।
ॐराजपुत्रायस्वाहा॥इतिषण्मंत्राः॥ततोलौकिकाग्नौस्थालीपाकविधिनाचरुंश्र

६७ पयित्वाऽनेनैव मंत्रैः षडिंद्रसहितैर्नेवाग्न्यादीन्नुक्त्वोपबलिमंत्रैरिंद्राग्नियमनैर्ऋतव
रुणवायुकुबेरेशानब्रह्मानंतानांनामभिश्चतुर्थ्यंतैर्नमोन्वितैभ्यो बलिं दद्यात्॥ ॥अन
तेरक्षिकुर्यादित्यनन्प्राह॥ ॥दद्याच्चतुष्पथे शूर्पं कुशानास्तीर्य सर्वतः॥ रक्तान् रक्तां
स्तंदुलांश्च पललौदनमेव च॥ मत्स्यमांसकांस्तथैवामामेमांसमेतावदेव तु॥ पुष्पं चि
त्रं सुगंधं च सुरां च त्रिविधामपि॥ मूलकं पूरिकापूपांस्तथैवोंडेरकस्रजः॥ दध्यन्नं
पायसं चैव गुडपिष्टं च मोदकं॥ एतान्सर्वान्समादृत्य भूमौ कृत्वा ततः शिरः॥ विना
यकस्य जननीमुपतिष्ठेत्ततोंबिकां॥ ॥रक्तान्रक्ताद्युपहारद्रव्यमानं विनायकस्यो
परस्य संनिधाना ततो जनन्याश्च शिरसा भूमिं गता॥ तत्पुरुषाय विद्महे वक्रतुंडाय धी राम
महि॥ तन्नो दंती प्रचोदयात्॥ इत्यनेन मंत्रेण विनायकं॥ सुभगायै विद्महे काम
मालिन्यै धीमहि॥ तन्नो गौरी प्रचोदयात्॥ इत्यनेन मंत्रेणांबिकां च नमस्कुर्यात्॥
तत उपहारशेषमास्तीर्य कुशशूर्पे निधाय चतुःपथे निदध्यात्॥ ॥बलिं गृह्णंत्वि
मे देवा आदित्या वसवस्तथा॥ मरुतोथाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः॥
असुरा यातुधानाश्च पिशाचा मातरो नगाः॥ शाकिन्यो यक्षवेतालाः योगिन्यः पूतनाः
शिवाः॥ जृंभकाः सिद्धगंधर्वा मालाविद्याधरा नराः॥ दिक्पाला लोकपालाश्च ये च

विघ्नविनायकाः ॥ जगतां शांतिकर्त्तारो ब्रह्मणाद्याश्च महर्षयः ॥ मा विघ्नो मा च मे पापं मा
संतु परिपंथिनः ॥ सौम्यान्यन्नानि भक्ष्याणि भुंजंतां स्वाहा ॥ ॥ इत्येतैर्मंत्रैः स्वा
हुताः सप्तदश हुतास्तंडुलाः । पललं तिलपिष्टं तन्मिश्रं ओदनः पललौदनः । मत्स्याः
पक्वा अपक्वाश्च मांसमेतावदेव तु । पक्वमपक्वं च । पुष्पं चित्रं रक्तपीतादिनानावर्णं ।
चंदनादि सुगंधद्रव्यं । सुरा त्रिविधा गौडी पैष्टी माध्वी चेति । मूलकं कंदाकारो मूलस्य
विशेषः । पूरिका प्रसिद्धा । अपूपः अस्तिद्गोधूमविकारः । कुंडरिका । स्रजः कुंडरिकाः
पिष्टादिमय्यः तस्पौलाः स्रजः मालाः । दध्यन्नं दधिमिश्रमन्नं ॥ पायसं दुग्धविकारः
॥ गुडपिष्टं गुडमिश्रं शाल्यादिपिष्टं । मोदकाः लड्डुकाः । अनंतरं तज्जननीं चांबिकां च
वक्ष्यमाणमंत्रेणोपतिष्ठेत ॥ ॥ किं कुर्वंश्चेत्याह ॥ दूर्वासर्षपपुष्पाणां दत्वार्घं पूर्णं
मंजलिं ॥ ॥ सकुसुमोदकेनार्घं दत्वा दूर्वासर्षपपुष्पाणां पूर्णमंजलिं च दत्वोपतिष्ठे
तेतिगतेन संबंधः । उपस्थानमंत्रानाह ॥ ॥ रूपं देहि यशो देहि भगं भगवति देहि मे
॥ पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे ॥ ॥ विनायकस्योपस्थाने भगवंतिस्पृह ॥
॥ ततः शुक्लांबरधरः शुक्लमाल्यानुलेपनः ॥ ब्राह्मणान्भोजयेद्दद्याद्वस्त्रयुग्मं गु
रोरपि ॥ ॥ ततोभिषेकानंतरं यजमानः शुक्लांबरधरः शुक्लमाल्यानुलेपनः ब्रा

ह्मणान्भोजयेत् यथाशक्ति।। गुरवे चक्रतावधापनकर्त्रे संपन्नाय विनायकस्नपनविधि
ज्ञाय वस्त्रयुग्मं दद्यात्।। अपिशब्दात् यथाशक्ति दक्षिणां विनायकोद्देशेन ब्राह्मणे
भ्यश्च।। तत्रायं प्रयोगः।। चतुर्भिर्ब्राह्मणैः सार्द्धमुक्तकलशैर्गुरुर्भद्रासनस्थयजमानं
तदनंतरं संनिधौ विनायकं तज्जननीं चांबिकां गंधपुष्पादिभिः समभ्यर्च्य च स्व
पयित्वा भद्रासने उपविष्टस्य यजमानस्य पुण्याहवाचनं कृत्वा चतुर्भिः कलशैरभि
षिच्य सार्षपतैलं शिरसि हुत्वा चरुहोमं कृत्वा। अभिषेकशालायां दिक्षु लोकपालेभ्यो
बलिं दद्यात्। यजमानस्तु स्नानानंतरं शुक्लांबरधरो गुरुणा सह विनायकांबिका
भ्युपस्थानं दत्त्वा शिरसा भूमिं गत्वा कुसुमोदकेनार्घं दत्त्वा दूर्वासर्षपपुष्पांजलिं च राम
द विनायकं तं बिकां चोपतिष्ठेत। गुरुरुपहारद्वयं भूपूर्वं वस्त्रोत्तरेण निदध्यात्।
अनंतरं वस्त्रयुगं च दत्त्वा यथादक्षिणां दत्त्वा ब्राह्मणान् भोजयेदिति।। ।। इति विना
यकस्नपनविधिः।। ।। अस्यैव विनायकस्योक्तोपहारेण संयोगांतरं दर्शयि
तुमाह।। ।। एवं विनायकं पूज्य ग्रहांश्चैव विधानतः।। कर्मणां फलमाप्नोति
श्रियं प्राप्नोत्यनुत्तमां।। ।। एवमुक्तेन प्रकारेण विनायकं संपूज्य कर्मणां फलमवि
घ्नेनाप्नोति सकलोपसंहारः।। संयोगांतरमाह। श्रियं चोत्कृष्टसमामाप्नोति निमित्तिका।

मध्वानेनैवविधानेनविनायकंसपूजयेदित्यर्थः॥ आदित्यादिग्रहपीडाशान्तिका
मस्यलक्ष्म्यादिकामस्यचग्रहपूजादिकेत्यविधास्यन्ग्रहपूजामुपक्षिपति। ग्रह
श्चैवविधानेनेत्यग्रहान्आदित्यादीन्वक्ष्यमाणविधिनासंपूज्यकर्मणांफलंप्रिय
चाप्नोतीति॥ ॥नित्यकामसंयोगा ॥ आदित्यस्यसदापूजांतिलकस्वामिन
स्तथा। महागणपतेश्चैवकुर्वन्सिद्धिमवाप्नुयात्॥ ॥आदित्यस्यसदानित्य
दिवसरक्तचंदनकुंकुमादिभिः पूजांकुर्वन्स्कंदस्यमहागणपतेश्चनित्यंपूजांकुर्वन्
सिद्धिमोक्षमदमाप्नोति। आत्मज्ञानद्वारेणप्राप्नोतीतिनित्यसंयोगः। आदित्यस्कं
दमहागणपतीनामन्तमस्यसर्वेषांवास्वस्मिन्निमित्तंस्वरूपंवाविनिर्मितचाति
स्तर्वांकुर्वन्सिद्धिमभिलषितांनामाप्नोति। नाथ्याच्चतुर्थ्याचेति॥ कामसंयोगइति
गणपतिकल्पेः॥ ग्रहांश्चैवविधानेनः कर्मणांफलमाप्नोतीतिविषयंप्राप्नोत्यसन्नुक्त
मामिसनेनग्रहपूजाख्यः कर्मणामविघ्नेनफलसिद्धिः श्रीः श्रवफलमित्सत्केमिदा
नीफलांतराण्याह॥ ॥श्रीकामः शांतिकामोवाग्रहयज्ञंसमाचरेत्॥ वृष्ट्यायुःपु
ष्टिकामोवातथैवाभिचरन्नपि॥ ॥श्रीकामइतिपूर्वोक्तस्यानुवादः॥ शांतिकामः आ
पदुपशांतिकामः। सस्यादिवृद्ध्यर्थंप्रवर्षणंवृष्टिः॥ आयुरपमृत्युजयेनदीर्घ

कालजीवनं पुष्टिरनघशरीरत्वं। एताः कामयत इति वृष्ट्यायुःपुष्टिकामः। ए
तेश्रीकामादयो ग्रहयज्ञं समाचरेत्॥ ग्रहानाह॥ सूर्यः सोमो महीपुत्रः सोमपुत्रो बृ
हस्पतिः॥ शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः॥ ॥एते सूर्यादयो ग्रहाः।
ग्रहाः पूज्यास्ते के किंरूपास्तत्राह॥ ॥ताम्रकात्स्फटिकाद्रक्तचंदनात्स्वर्णकादुभौ॥
रजतादयसः सीसात्कांस्यात्कार्या ग्रहाः क्रमात्॥ स्ववर्णैर्वा पटे लेख्या गंधैर्मं
डलकेषु वा॥ ॥सूर्यादीनां मूर्तयस्ताम्रादिभिर्यथाक्रमं कार्याः। तदभावे स्ववर्णै
रक्तादिभिर्वर्णकैः पटे लेख्याः। मंडलेषु वा गंधैः कुंकुमरक्तचंदनादिभिर्यथावर्णं ले-
ख्या इत्यन्वयः॥ द्विभुजत्वादिविशेषो मत्स्यपुराणोक्तो द्रष्टव्यः॥ ॥यथाह॥ राम
पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः॥ सप्ताश्वः सप्तरज्जुश्च द्वि
भुजः स्यात्सदा रविः॥ श्वेतः श्वेतांबरधरो दशाश्वः श्वेतभूषणः॥ गदापाणिर्द्वि
भुजः कर्तव्यो वरदः शशी॥ रक्तमाल्यांबरधरः शूलशक्तिगदाधरः॥ चतु
र्भुजो मेषगमो वरदः स्याद्धरासुतः॥ पीतमाल्यांबरधरः कर्णिकारसमद्युतिः॥
खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः॥ देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भु
जौ॥ दंडिनौ वरदौ कार्यौ साक्षसूत्रकमंडलू॥ इंद्रनीलद्युतिः शूली वरदो गृध्रवाहनः॥

बाणबाणासनधरः कर्त्तव्योर्कसुतः सदा ॥ करालवदनः खड्गचर्मशूली वरप्रदः ॥ नीलसिं
हासनस्थश्च राहुरत्र प्रशस्यते ॥ धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः ॥ गृध्रासनगता
नित्यं केतवः स्युर्वरप्रदाः ॥ सर्वे किरीटिनः कार्या ग्रहा लोके हितावहाः ॥ स्वांगुले
नोच्छ्रिताः सर्वे शतमष्टोत्तरं सदा इति ॥ एतेषां स्थापनदेशाश्च तंत्रेणोक्ताः ॥ मध्ये तु भा
स्करं विंद्यात्सोमं दक्षिणपूर्वके ॥ दक्षिणे लोहितं विंद्याद्बुधं पूर्वोत्तरे तथा ॥ उत्त
रेण तु स्थापयेच्छुक्ले तंदुले इति ॥ ॥ पूजाविधिमाह ॥ यथावर्णं प्रदेयानि वासांसि
कुसुमानि च ॥ गंधाश्च बलयश्चैव धूपो देयश्च गुग्गुलः ॥ कर्त्तव्या मंत्रवंतश्च च
रवः प्रतिदैवतं ॥ यथावर्णं यस्य ग्रहस्य यानि वर्णानि वस्त्रगंधपुष्पाणि
देयानि बलयश्च । धूपश्च सर्वेभ्यो गुग्गुलो देयः ॥ चरवः प्रतिदैवतं ॥ अग्निप्र
तिष्ठापनाद्यादित्यपूर्वकं चतुरश्चतुरो मुष्टीन् निर्वपति ॥ अमुष्मै त्वा जुष्टं निर्व
पामि इत्यादिविधिना कार्याः ॥ अनंतरं सुसमिद्धेऽग्नौ इध्माधानादि आघारावाज्यांतं कृ
त्वा ॥ आदित्यादि साधु देवतानं यथाक्रमं वक्ष्यमाणमंत्रैर्वक्ष्यमाणाः समिधो वक्ष्यमा
णप्रकारेण जुहुयाच्चरवो होतव्याः ॥ मंत्रानाह ॥ आकृष्णेन ॥ इमं देवा ॥ अग्निर्मूर्द्धा दिवः
ककुत् ॥ उद्बुध्यस्वेति ऋचो यथासंख्यं प्रकीर्तिताः ॥ बृहस्पते अति यदर्यस्तथैवा

७१ मपिपृष्टमत्नमाह त्रिगम्यन्ते उभयत्र कारणमाह प्राणिनामभ्युदयविनिपातौ ग्रहाधीनौ
यस्मात्तेनाधिकारिभिः पूज्याः किं च जगतः स्थावरजंगमात्मकस्य भावाभावावुत्पत्ति
निरोधौ ग्रहाधीनौ तत्र यद्येते पूजितास्तदा स्वकाले उत्पत्तिनिरोधौ भवतोन्यथोत्प
त्तिसमये तस्य नोत्पादोन्यकाले च निरोधो। जगदभ्युदयस्याधनैरग्रहाणां तद्योगस्यमस्व
मकारिणां पूज्यत्वमाग्रहा इति तथाविशेषेण ग्रहशांतिकादिष्वधिकारः। तथा च गौतमे
न राजा सर्वस्येष्टे ब्राह्मणवर्जमिति राजानमधिकृत्य वर्णानाश्रमांश्च न्यायतोभिरक्षे
च्चलतश्चैतान्स्वधर्मे स्थापयेदित्यादीन्कांश्चिद्धर्माननुक्त्वा यानि च दैवोत्पातचिंत
काः प्रब्रूयुस्तान्याद्रियेत तदधीनमपि ह्येके योगक्षेमं प्रतिजानते इति शांतिकपौष्टि राम
काद्यनुष्ठाने हेतुमभिधाय शांतिपुण्याहस्वस्त्ययनायुष्यमंगलसंयुक्तान्याभ्युदयि
कानि विद्वेषणसंस्तंभनाभिचारद्विषद्व्याधिसंयुक्तानि च शालाग्नौ कुर्यादिति दर्शितानि॥
॥इति ग्रहशांतिप्रकरणं॥ ॥साधारणान्गृहस्थधर्मानभिधायेदानीं राज्याभिषि
क्तादिगुणयुक्तस्य विशेषधर्मानाह महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः। विनी
तः सत्त्वसंपन्नः कुलीनः सत्यवाक्छुचिः। अदीर्घसूत्रः स्मृतिमानक्षुद्रोपरुषस्तथा।
धार्मिकोव्यसनश्चैव प्राज्ञः शूरो रहस्यवित्। स्वरंध्रगोप्तान्वीक्षिक्यां दंडनीत्यां त

येषां च विनीतस्य एव वार्तायां त्रय्यां चैव नराधिपः ।। पुरुषार्थसाधनकर्मारंभाध्यवसा
यउत्साहः । महानुत्साहो यस्यासौ महोत्साहः ।। वहुदेयार्थदर्शी स्थूललक्षः । परकृतोपका
रापकारौ न विस्मरतीति लक्षः ।। नयोज्ञानादिवृद्धानां सेवकः ।। वृद्धसेवकः ।। विनयेनयु
क्तो विनीतः । विनयेषड्वाक्येन प्रविरुद्धपूर्वोक्तस्नातकधर्मकलापरुच्यते । न संशयं
प्रपद्येत नाकस्मादप्रियं वदेदित्यादिनोक्तः ।। सत्वसंपन्नः संपदापदयोर्हर्षविषादरहि
तः । मातृतः पितृतश्चाभिजनवान् कुलीनः ।। सत्यवाक् सत्यवदनशीलः ।। शुचिर्बाह्या
भ्यं । तरशौचयुक्तः ।। प्रवृत्तस्य कार्यस्य कर्मणामारंभे प्रारब्धानां च समाप्तिर्येन विलंव
ने ऽसावदीर्घसूत्रः ।। अधिगतार्थविस्मरणशीलः स्मृतिमान् ।। अक्षुद्रः प्रसन्नः ए दृषी
·अपरुषः परदोषाकीर्त्तनः ।। धार्मिको वर्णाश्रमधर्मान्वितः ।। न विद्यन्ते व्यसनानि
यस्यासावव्यसनः । व्यसनानि चाष्टादश । यथाह मनुः ।। मृगयाक्षादिवास्वप्नः परिवा
वाच्यविशेषः दः स्त्रियो मदः । तौर्यत्रिकं वृथाट्या च ।। कामजो दशको गणः ।। पैशुन्यं साहसं द्रोह ईर्ष्या
सूयार्थदूषणं । वाग्दंडजं च पारुष्यं क्रोधजो पि गणो ष्टक इति । तत्र च सप्तसु कष्टतमानि ·
यथाह मनुः ।। पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमं । एतत्कष्टतमं विद्याच्चतुष्कं काम
जे गणे । दंडस्य पातनं चैव वाक्पारुष्यार्थदूषणे । क्रोधजेपि गणे विद्यात्कष्टमेतत् त्रिकं स
देति । प्राज्ञो गंभीरार्थावधारणक्षमः ।। शूरो निर्भयः ।। रहस्यविन्नगोपनीयार्थगोपनचतुरः ।

 स्वरंध्रगोप्तास्वस्य सप्तसुराज्यांगेषु यत्तद्वेश्रद्वारं तत्त्रीपिल्यंत स्वरंध्रंतस्यगोप्ता प्रच्छादयि
ता॥ आन्वीक्ष्यां आत्मविद्यायां। दंडनीत्यां अर्थयोगक्षेमोपयोगिन्यां। वार्तायां कृषिवाणिज्य
पशुपालनरूपायां धनोपचयहेतुभूतायां। त्रय्यां ऋग्यजुःसामात्मिकायां। विनीतस्तदभिज्ञैः
प्रापितविनीतः। यथाह मनुः। त्रैविद्येभ्यस्त्रयीं विद्याद्दंडनीतिं च शाश्वतीं॥ आन्वीक्षिकीं चा
त्मविद्यां वार्तारंभांश्च लोकतः इति। नराधिपो राज्येभिषिक्तः स्यादिति सर्वत्र संबंधः॥ ए
वमभिषिक्तस्य गुणयुक्तस्यांतरंगाभ्यर्थमानमभिधायेदानीं बहिरंगानाह। स मंत्रिणः
प्रकुर्वीत प्राज्ञान्मौलान्स्थिराञ्छुचीन्। तैः सार्धं चिंतयेद्राज्यं विप्रेणाथ ततः स्वयं॥
महोत्साहादिगुणयुक्तो राजा मंत्रिणः कुर्वीत। कथंभूतान्। प्राज्ञान् हिताहितविवेककुशला राम
न्। मौलान् स्ववंशपरंपरयागतान्। स्थिरान्महत्यपि हर्षविषादस्थाने विकाररहि
तान्। शुचीन्। धर्मार्थकामभयोपधाशुद्धान्। नैव समस्ता एको वा कर्तव्याः। यथाह
मनुः। मौलाञ्छास्त्रविदः शूरांल्लब्धलक्षान्कुलोद्भवान्। सचिवान्सप्त
चाष्टौ वा कुर्वीत सुपरीक्षितान् इति। एवं मंत्रिणः पूर्वं कृत्वा तैः सह राज्यं तत्संधिवि
ग्रहादिकार्यं चिंतयेत् न्यस्तैः समस्तैः समस्तैश्च। अनंतरं तेषामभिप्रायं ज्ञात्वा स
कलशास्त्रार्थविचारकुशलेन ब्राह्मणेन विपुरोहितेन सह कार्यं विचिंत्य ततः

स्वबुध्या कार्यं विचिंतयेत् · कीदृशं पुरोहितं कुर्यादित्याह · पुरोहितं प्रकुर्वीत दैवज्ञमुदितोदितं ·
दंडनीत्यां च कुशलमथर्वांगिरसे तथा · पुरोहितं सर्वेषु दृष्टादृष्टेषु कर्मसु । पुरोहितं दानमानस
त्कारैरात्मसंबद्धं कुर्यात् · कथंभूतं दैवज्ञं ग्रहोत्पातनक्षत्रगणनादिवेदिनं उदितोदितं · वि
द्याभिजनानुष्ठानादिभिरुदितैः शास्त्रोक्तैरुदितं समृद्धं · दंडनीत्यामर्थशास्त्रे कुशलं
अथर्वांगिरसे च शांत्यादिकर्मणि · श्रौतस्मार्तक्रियापारगो वरेण्यः पादवच्चर्त्विजः । यज्ञांश्चै
व प्रकुर्वीत विधिवद्भूरिदक्षिणान् · श्रौताग्निहोत्रादिस्मार्तोपासनादिक्रियानुष्ठानसिध्य
र्थं ऋत्विजो वृणुयात् · यज्ञांश्च राजसूयादीन् विधिवद्यथाविधानं भूरिदक्षिणान् बहु
दक्षिणान् कुर्यात् · किंच भोगांश्च दद्याद्विप्रेभ्यो वसूनि च · अक्षय्योयं निधी राज्ञां यद्विप्रेषू
पपादितं · ब्राह्मणेभ्यो भोगान्सुखानि तत्साधनद्वारेण दद्यात् · वसूनि च सुवर्णरौप्यप्रभृ
तीनि नानाप्रकाराणि · यस्माद्राज्ञामक्षय्यो निधिर्यद्ब्राह्मणेभ्यो दीयते · साधारणधर्म
त्वेन दानप्रशंसा सत्यां राज्ञो दानप्रतिपादनार्थं पुनर्वचनं । किंच अस्कन्नमव्यथं चैव प्राय
श्चित्तैरदूषितं अग्नेः सकाशाद्विप्राग्नौ हुतं श्रेष्ठमिहोच्यते · अग्नेः सकाशाद्वाग्निसा
ध्याद्भूरिदक्षिणराजसूयादेरपि विप्राग्नौ हुतं श्रेष्ठमुच्यते · यत एतदस्कन्नं स्खल
नरहितं · अव्यथं पशुहिंसारहितं । प्रायश्चित्तैरदूषितं प्रायश्चित्तायासरहितं · वसू
नि विप्रेभ्यो दद्यादित्युक्ते कथं पात्रे दद्यादित्याह · अलब्धमीहेद्धर्मेण लब्धं यत्ने

७३ नपालयेत्· पालितं च वर्धयेत्· वर्धितं पात्रेषु निक्षिपेत्· अलब्धलाभार्थं धर्मशास्त्रानुसा
रेण यतेत· लब्धं परिपालयेत् स्वयमेव स्यात्स्येन· पालितं नीत्या वाणिज्यकृष्यादिक
मा वृद्धिं नयेत्· वृद्धं च पात्रेषु अर्थार्थकाम पात्रेषु निक्षिपेत् दद्यात्· पात्रे निक्षिप्य
किं कुर्यादित्याह· दत्वा भूमिं निबंधं वा कृत्वा लेख्यं तु कारयेत्· आगामिभद्रनृपति
परिज्ञानाय पार्थिवः। यथोक्तविधिना भूमिं दत्वा स्वत्वनिवृत्तिं कृत्वा· निबंधं वा· एकस्य
भांडभरकस्य यंतो रूपकाः॥ एकस्य पर्णभरकस्यैतावंति पर्णानीति वा निबंधं वा लेख्यं
कारयेत्· किमर्थं आगामिनः एष्यंतो ये भद्राः साधवो नृपतयो भूपतयस्तेषाम् अनेन द
त्तं अनेन परिगृहीतमिति परिज्ञानाय पार्थिवो भूपतिः। अनेन नृपतेरेव भूमिदाने नि रामः
बंधदाने वाधिकारो न भोगपतेरिति दर्शितं· लेख्यं कारयेदित्युक्तं कथं कारयेदित्या
ह· पटे वा ताम्रपट्टे वा स्वमुद्रोपरि चिह्नितं अभिलेख्यात्मनो वंश्यानात्मानं च मही
पतिः। प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनं· स्वहस्तकालसंपन्नं शासनं कारयेत्स्थि
रं· कार्पासिके पटे ताम्रपट्टे ताम्रफलके वात्मनो वंश्यान्प्रपितामहपितामहपितॄन्स्व
कुलवर्णस्यार्ष्येव वन्नयावंश्यावीर्यश्रुतादिगुणोपवर्णनपूर्वकमभिलेख्यात्मानं च
शाब्दास्प्रति ग्रहीतारं· प्रतिग्रहपरिमाणं दानच्छेदोपवर्णनं चाभिलेख्य प्रतिग्रह ७३

तद्वृत्तिप्रतिग्रहो निबंधस्तस्य रूपकादिपरिमाणं. दीयत इति दानं सत्रादि. तस्य छे-
दः छिद्यते विच्छिद्यतेनेनेति छेदो नद्याघाटः निवर्तनपरिमाणं तस्योपवर्णनं. अ-
मुकनद्या दक्षिणेनोयं ग्रामः क्षेत्रं वा पूर्वतोऽमुकग्रामस्य तावन्निवर्तनमित्यादि
निवर्तनपरिमाणं च लेख्यमेव. आघाटस्य नदीनगरवर्त्मादेः संचारित्वेन भूमेर्न्यू-
नाधिकभावसंपन्नं पुरुषं कालेन च द्विविधेन. शकनृपातीतसंवत्सररूपलक्षणेन का-
लेन चंद्रसूर्योपरागादिना संपन्नं स्वमुद्रया गरुडवाराहादिरूपयोपरिचिह्नि-
तं तेन भेदितं स्थिरं दृढं शासनं त्रिषु पत्तेषु भविष्यतो नृपान् प्रति दानाच्छ्रेयोनुपालनमि-
ति शासनं कारयेत् अग्रहोपातिर्भोगपतिः। संधिविग्रहादिकारिणा नयेन केनचित्. संधि-
विग्रहकारी तत्र भवेद्यस्तु स्पलेखकः। स्वपराज्ञां समादिष्टः सलिखेद्राजशासनमि-
ति स्मरणात्. दानमात्रेणैव दानफले सिद्धे शासनकरणं तत्रैव भोगादिव्याप्-
त्यतिशयार्थं॥ ॥इदानीं राज्ञो निवासस्थानमाह॥ ॥रम्यं पशव्यमाजीव्यं जांगलं
देशमावसेत्. तत्र दुर्गाणि कुर्वीत जनकोशात्मगुप्तये. रम्यं रमणीयं अशोकचंप-
कादिभिः। पशव्यं पशुभ्यो हितं पशुसमृद्धिकरं. आजीव्यमुपजीव्यं कंदमूलपुष्पफ-
लादिभिः। जांगलं यद्यप्यल्पोदकतरुपर्वतोद्रेको जांगलस्तथाप्यत्र समजलत्वरूप

मिता०

७४ वैतोदेशोजांगलस्तथाप्यत्रसमजलनरपर्वतोदेशोजांगलशब्देनाभिधीयेते· तंदेश
मावसेदधिवसेत्· तत्रैवंविधेदेशेजनानांकोशस्यसुवर्णादेरात्मनश्चरक्षणार्थंदु
र्गंकुर्वीत· दुर्गंचषड्विधं·यथाहमनुः। धन्वदुर्गंमहीदुर्गमब्दुर्गंवार्क्षमेवच· नृदुर्गंगिरि
दुर्गंवासमाश्रित्यवसेत्पुरमिति· किंच· तत्रतत्रचनिपुणानध्यक्षान्कुशलान्शु
चीन्· प्रकुर्यादायाकर्मान्तव्ययकर्मसुचायनाव· ~~स्त्रीषुक्लीबान्नियुंजीतनीचा~~
तत्रतत्रचधर्मार्थकामादिषुअध्यक्षान्योग्यानधिकारिणः प्रकुर्यान्नियुंजीत· यथा
हुः। धर्मिष्ठेषुधर्मज्ञानर्थेष्वर्थेषुपंडितान्· स्त्रीषुक्लीबान्नियुंजीतनीचान्नीचेषुक
र्मस्विति· कीदृशान्निपुणान्अनन्यव्यापारान्· कुशलान्स्वव्यापारचतुरान्· शुची राम
न्चतुर्विधोपधाशुद्धान्· आयकर्मसुसुवर्णादिषुसत्स्थानेषुव्ययकर्मसुसुवर्णा
दिदानस्थानेषु ~~व्यसनाभावःस्वामिभक्तिश्चयोग्यतेति भोगांश्चदद्यादिति नोवसु~~
उपन्नान्अनलसान्· वृद्धत्वाप्रज्ञत्वादिगुणयुक्तान्· उक्तंच· प्राज्ञत्वमुपधाशुद्धि
रप्रमादोभियुक्तता· कार्येष्वव्यसनाभावः स्वामिभक्तिश्चयोग्यतेति· भोगांश्चदद्या
द्विप्रेभ्योवसूनिविधानिचेतिसामान्येनस्वस्यदानमुक्तं॥ ॥इदानींनृपाणांविक्रमा
र्जितस्यदानफलातिशयमाह॥ ॥नातःपरतरोधर्मोनृपाणांयद्रणार्जितं· विप्रेभ्यो ७४

दीयते द्रव्यं प्रजाभ्यश्चाभयं तथा॥ नास्मात्तु उत्तमो धर्मो नृपाणां विद्यते॰ यद्रणार्जितं
द्रव्यं विप्रेभ्यो दीयते॰ यच्च प्रजाभ्योऽभयप्रदानं॰ रणार्जितं देयमित्युक्तं॰ द्रव्यार्जनापरलो
प्रदत्तस्य विपत्तिरपि संभवतीति न धर्मो नाप्यर्थ इत्यततो निवर्तेरवमित्युपसी॰ सूक्तोऽस्मा
ह॥ ॥ये आहवेषु वध्यन्तेऽभूम्यर्थमपराङ्मुखाः॥ अकूटैरायुधैर्यान्ति ते स्वर्गं योगि
नो यथा॥ ये भूम्याद्यर्थमाहवेषु परस्परं अपराङ्मुखा अभिमुखा वध्यन्ते मार्यन्ते॰
ते स्वर्गं यान्ति॰ योगाभ्यासरता यथा यथा कूटैरविषादिलिप्तादिभिरायुधैर्योद्धारो भ
वन्ति॰ किंच॥ पादानि क्रतुतुल्यानि भग्नेष्वविनिवर्तिनां॰ राजा सुकृतमादत्ते हतानां
विपलायिनां॥ स्वबलेषु करितुरगरथपदातिषु भग्नेषु अविनिवर्तिनां परबलाभि
मुखयायिनां पदानि क्रतुतुल्यानि अश्वमेधतुल्यानि॥ विपर्यये दोषमाह॥ विपला
यिनां पराङ्मुखानां हतानां राजा सुकृतमादत्ते॥ अपि च॥ न वाहंवादिनं क्लीवं निर्हेतिं
परसंगतं॰ नरस्यादिनिवृत्तं च युद्धप्रेक्षणकादिकं॥ न वाहमिति यो वदति तं॰ क्ली
वनपुंसकं॰ निर्हेतिं निरायुधं॰ परसंगतं अन्येन सह युध्यमानं॰ निवृत्तं युद्धादिनिवृ
त्तं॰ युद्धप्रेक्षणकं युद्धदर्शिनं मनुष्यादिति सर्वत्र संबंधः॥ आदिग्रहणाद् दस्युसा
रथ्यादीनां ग्रहणं॥ यथायोगो न मम॥ न दोषो हिंसायामाहवे॥ अन्यत्र अश्वसारथ्यना

७५ युध्यकृतांजलिप्रकीर्णकेशावपराङ्मुखोपविष्टस्थलवृक्षारूढदूतगोब्राह्मणवादि
भ्यरत्ति॥क्लीबोप्याह॥नपानीयंपिबंतंनभुंजानंनोपानहौमुंचंतंनोवर्माणंसवर्मान
स्त्रियंनकरेणुंनवाजिनंनसारथिनंसूतंनदूतंनब्राह्मणंनराजानंनराजाहन्यादिति·
॥ततरक्षः समुत्थायपश्येदायव्ययौस्वयं·व्यवहारांस्ततोदृष्ट्वास्नात्वाभुंजीतका
मतः॥ततरक्षाःपुरस्यात्मनश्चरक्षांविधायप्रतिदिनंप्रातःकालउत्थायस्वय
मेवआयव्ययौपश्येत·ततोव्यवहारान्दृष्ट्वामध्याह्नकालेस्नात्वाकामतोयथारु
चिंभुंजीत॥हिरण्यंव्यापृतानीतंभांडागारेषुनिक्षिपेत्·पश्येच्चारांस्ततोदूतान्प्रे
षयेन्मंत्रिसंगतः॥तदनंतरंहिरण्यादिकंयोयुक्तैर्हिरण्याद्यानयननियुक्तैरानी राम
तंस्वयमेवनिरीक्ष्यभांडागारेषुनिक्षिपेत्·ततश्चारानविश्वास्यान्प्रसारगतानुपा-
श्येत्·येपरराज्यवृत्तांतपरिज्ञानायपरिव्राजकतापसादिरूपेणगूढचारिणःप्रे
षितास्तांश्चदृष्ट्वाकंचिन्निवेशयेत्तदनंतरंदूतांश्चपश्येत·दूतांश्चप्रकट
मेवराज्ञांतरंप्रतिगतागतमाचरंति·तेचत्रिविधाः॥निसृष्टार्थाः संदिष्टार्थाःशास
नहस्ताश्चेति·तत्रनिसृष्टार्थाःराजकार्याणिदेशकालोचितानिस्वयमेवकल्पयितुं
क्षमाः॥उक्तमात्रयेपरस्मैनिवेदयंति·तेसंदिष्टार्थाः॥शासनहस्तास्तुराजराजे ७५

लेख्यहारिणः। तान्पूर्वप्रेषितानागतान्मंत्रिसंगतः परीक्षेत दृष्ट्वा न धात्रीमाकल
प्य पुनः प्रेषयेत्॥ ततः स्वैरविहारी स्यान्मंत्रिभिर्वा समागतः। चलानां दर्शनं कृत्वा से
नाभ्यासं हृदि चिंतयेत्॥ तदनंतरमपराह्णे स्वैरं यथेष्टमेकैकोंतःपुरविहारी स्यात्।
मंत्रिभिर्वा विश्वासिभिः कलाकुशलैः परिहासवेदिभिः परिवृतः स्त्रीभिश्च स्वरूपयौ
वनवैदग्ध्यशालिनीभिः॥ भुक्त्वा विहरेच्चैव स्त्रीभिरंतःपुरे सह। विदूसर्वयथाक्रा।
मं पुनः कार्याणि चिंतयेद्दिनमनुस्मरणात्। ततो विशिष्टैः स्रक्कुसुमविलेनालंकारे
रलंकृतः हस्त्यश्वरथपदातिबलानि दृष्ट्वा सेनान्यासारथिना पतिना सह तद्रक्षणं
दिदृक्षाकालोचितं चिंतयेत्॥ संध्यामुपास्य श्रणुयाच्चाराणां गूढभाषितानि गीतनृत्यै
श्च भुंजीत पठेत्स्वाध्यायमुच्चैर्वा॥ ततः सायंकाले संध्यामुपास्य सामान्ये प्रासस्था
पि पुनर्वचनं कार्याकुलत्वाद्विस्मरणार्थं अनंतरं ये पूर्वदृष्टाः कनि[illegible]स्थाने निवे
शितास्तेषां चाराणां गूढभाषितानि मंत्रवेत्रमनिशास्त्रपालैः श्रणुयात् [illegible]केव॥ संध्यां
चोपास्य श्रणुयाद्दत्तनैमनिशास्त्रमत्त। रहस्याख्यायिनां च प्रणिधीनां कचेष्टि
तमिति॥ ततो नृत्यगीतादिभिः कंचित्कालं क्रीडित्वा कक्षांतरं प्रविश्य किंचिद्भुंजीत।

वेदिकानि स्त्रुवे विवाहोपयोगीनि कन्यालंकारादीनि गृह्णाति वसुधाधवलितानि श्रो
त्रियेभ्योऽधीतवेदेभ्यो ब्राह्मणेभ्यो दद्यादिति प्रसंगेन संबध्यते॥ ब्राह्मणेषु क्षमी स्निग्धे
ष्वजिह्मः क्रोधनोरिषु। स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता॥ ब्राह्मणेष्वधिक्षिपत्स्व
पि क्षमी क्षमी क्षमावान् स्निग्धेष्वजिह्मः क्रोधनोरिषु। स्याद्राजा भृत्यवर्गेषु प्रजासु च
यथा पिता॥ ब्राह्मणेष्वधिक्षिपत्स्वपि क्षमी क्षमावान् स्निग्धेषु स्नेहवत्सु मित्रा
दिष्वजिह्मः ~~क्रोधनोरिषु स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता॥ ब्राह्मण~~ अवक्रः। अरिषु
क्रोधनः। भृत्यवर्गेषु प्रजासु च हितान्वरणे न प्रहितानि वर्तनेन च पितेव दयावान् स्यादि
ति प्रसंगेन संबध्यते॥ किंच पुण्यात् षड्भागमादत्ते न्यायेन परिपालयन्। सर्वदानादपि
कं यस्मात्प्रजानां परिपालनं॥ यस्मान्न्यायेन शास्त्रोक्तमार्गेण प्रजाः परिपालयन् परिपा
लितप्रजोपार्जित पुण्यात् षड्भागं षष्ठभागमादत्ते। यस्माच्च सर्वेभ्यो भूम्यादिदानेभ्यः प्रजा
नां परिपालनमधिकफलं तस्मात्प्रसुपथापितान्नैवास्यादिति गतेन संबंधः॥ चाटतस्क
रदुर्वृत्तमहासाहसिकादिभिः। पीड्यमानाः प्रजा रक्षेत्कायस्थैश्च विशेषतः॥ चाटाः प्र
तारकाः विश्वास्य ये परधनमपहरंति। प्रच्छन्नापहारिणः तस्कराः। दुर्वृत्ताः ऐं
द्रजालिककितवादयः। सहो बलं सहसा बलेन कृतं साहसं महच्च तत्साहसं च महा

साहसं तेन वर्तन्त इति साहसिकाः प्रसह्यापहारिणः। आदिशब्दात् मौलिककुहक
प्रभृतयः। एतैः पीड्यमाना बाध्यमानाः प्रजा रक्षेत्। कायस्थाः गणकाः लेखकाश्च तैः
पीड्यमाना विशेषतो रक्षेत्। तेषां राजवल्लभतया अतिमायावितया च दुर्निवारत्वा
त्॥ अरक्ष्यमाणाः कुर्वन्ति यत्किंचित्किल्बिषं प्रजाः। तस्मात्तु नृपतेरर्धं भवेदिति। यस्माद
सौ राजा रक्षणार्थं प्रजाभ्यः करान् गृह्णाति॥ ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितं।
साधून् संमानयेद्राजा विपरीतांश्च घातयेत्॥ उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवा
सयेत्। सद्दानमानसत्कारान् श्रोत्रियान्वासयेत्सदा॥ राष्ट्रे राज्ञाधिकारेषु ये नियु
क्तास्तेषां विचेष्टितं चरितं चारैः ... सम्यग्ज्ञात्वा साधून् सुचरितान् संमान राम
येत् दानमानसत्कारैः पूजयेत्। विपरीतान् दुष्टचरितान् सम्यग्विदित्वा घातयेत् अपरा
उत्कोच्य ग्राहिणः धानुसारेण। ये पुनरुत्कोचजीविनस्तान् द्रव्यरहितान् कृत्वा स्वराष्ट्रात् प्रवासयेत्॥ श्रो
त्रियान् दानमानसत्कारैः सहितान् कृत्वा स्वराष्ट्रे स्वदेशे सदैव वासयेत्॥ अन्यायेन
नृपो राष्ट्रात्स्वकोशं योऽभिवर्धयेत्। सोऽचिराद्विगतश्रीको नाशमेति सबांधवः॥
यो सौ राजा स्वराष्ट्रादन्यायेन धनमादाय स्वकोशं वर्धयति सोऽचिरात् शीघ्रमेव
विगतश्रीको विनष्टलक्ष्मीको बंधुभिः सह विनाशं प्राप्नोति॥ प्रजापीडनसंतापा

समुद्भूतो हुताशनः ।। राज्ञः श्रियं कुलं प्राणान् नादग्ध्वा विनिवर्त्तते ।। प्रजानां तस्क-
रादिहेतनपीडनेन यः संतापः तस्मादुद्भूतो हुताशनो दाहकसंतापकारित्वाद्दुःखपरा।शिर्हु-
ताशनशब्देनोच्यते ।। स राज्ञः श्रियं कुलं प्राणान्नादग्ध्वा नाशमनीचानैनिवर्त्तते नो-
पशाम्यति । यः एवं नृपतेर्धर्मः स्वराष्ट्रपरिपालने । तमेवस्व-जनमामीति परराष्ट्रं वशं
नयन् । न्यायतः स्वराष्ट्रपरिपालनेन राज्ञो यो धर्मः तस कुलं वक्ष्यमाणन्यायेन पर
राष्ट्रं वशं नयन् ग्रामसात्कुर्वन्नाप्नोति धर्मेण भोगं च ।। यस्मिन्देशे य आचारो
व्यवहारः कुलस्थितिः । तथैव परिपाल्योऽसौ यदा वशमुपागतः ।। यदा परदेशो
वशमुपगतस्तदा स्वदेशाचारादिसंकरो न कार्यः ।। स यस्मिन्देशे य आचारः कु-
लस्थितिर्व्यवहारो वा यथैव प्रागासीत्तथैवासौ परिपालनीयो यदि शास्त्रविरुद्धो
न भवति ।। यदा वशमुपागत इत्यनेन वशोपगमनात्प्रागनियम इति दर्शितं । यथो-
क्तं उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् । दूषयेच्चास्य सततं यवसान्नोद-
केन्धनमिति ।। मंत्रमूलं यतो राज्यं तस्मान्मंत्रं सुरक्षितं । कुर्याद्यथास्य न विदुः क-
र्मणामाफलोदयात् ।। यस्मात्तैः सार्धं चिंतयेद्राज्यमित्याद्युक्तं मंत्रमूलं राज्यं तस्मा-
न्मंत्रं यत्नेन तथा सुरक्षितं कुर्यात् । यथाऽस्य राज्ञः कर्मणां संधिविग्रहादीनाम-

७८ फलोदयात्फलनिष्पत्तेर्यावत्प्रत्ययं मंत्रं न जानंति। किंच ॥ अरिर्मित्रमुदासीनोनं
तरः स्तत्परः परः ॥ क्रमशो मंडलं चिंत्यं सामादिभिरुपक्रमैः ॥ अरिः शत्रुः मित्रं सु
हृत् उभयविलक्षण उदासीनः। ते च त्रयस्त्रिविधाः। सहजाः कृत्रिमाः प्राकृता
श्चेति। तत्र सहजो ऽरिः सापत्नपितृव्यतत्पुत्रादयः। कृत्रिमो ऽरिर्यस्यापकृ
तं येन चापकृतं। प्राकृतस्त्वनंतरदेशाधिपतिः। अरिश्च त्रिविधः। यातव्योच्छेत्तव्यपी
डनीयकर्शनीयभेदेन। तत्र यातव्यो ऽनंतरभूमिपतिः। व्यसनी हीनबलविरक्तप्रकृ
तिः विदुर्गो मित्रहीनो दुर्बलश्चोच्छेत्तव्यः। पीडनीयो मंत्रबलहीनः। प्रबलो मित्रबल
युक्तः कर्शनीयः। निर्मूलनाशश्छेदः पीडनं बलनिग्रहः। कर्शनं पुनः प्राहुः कोशदं राम
डापकर्शनादिति। मित्रं च द्विविधं। रक्षणीयं कर्शनीयमिति। कोशबलहीनं र
क्षणीयं। कोशबलाधिकं कर्शनीयं। अनंतरस्तत्परः पर इति प्राकृतारिमित्रो
दासीनानाह। अनंतरः प्रकृत्यारिः तत्परः प्राकृतं मित्रं। तस्मात्पर उदासीनः। शे
षाः पुनः प्रसिद्धत्वान्नोक्ताः। एतद्राजमंडलकं मंत्राः पूर्वादिक्रमेण चिंत्यं तेषां
चेष्टितं ज्ञातव्यं। ज्ञात्वा च सामादिभीरुपायैर्वक्ष्यमाणैरित्यनुसंधेयं। एवं ७८

पुरतःपृष्ठतःपार्श्वतश्चत्रयस्त्रयःप्राप्ताश्चैकइतित्रयोदशराजकमिदंराजमं
डलंयथाकारःपार्ष्णिग्राहाक्रंदासारादयस्त्वरिमित्रोदासीनेष्वेवान्तर्भवंतीत्यतिसं
ज्ञाभेदमात्रंमंत्रान्तरेदर्शितमितियोगीश्वरेणनपृथगुक्ताः।सामादिभिरुपक्र
मैरित्युक्तमिदानींतानुपायानाह॥उपायाःसामदानंचभेदोदंडस्तथैवच।सम्य
क्प्रयुक्ताः।सामादिभिरुपक्रमैरित्युक्तमिदानींतानुपायानाह॥उपायाःसामदा
नंचभेदःसिध्येयुर्दंडस्तुगतिकागतिः॥सामप्रियभाषणं·दानंसुवर्णादेः·भेदोभे
दकरणंतत्सामंतादीनांपरस्परतोवैरस्योत्पादनं·दंडउपांशुप्रकाशताभ्यांधना
पहारादिर्वधपर्यंतोपकारः।एतेपरिपंथ्यादीनांसाधनोपायाःसामादयः।एते
चदेशकालाद्यनुसारेणसम्यक्प्रयुक्ताःसिध्येयुः।तेषांमध्येदंडस्तुगतिकाग
तिः।उपायांतरसंभवेनप्रयोक्तव्यः।एतच्चपीडनीयकर्शनीयाभिप्रायेण।या
यात्तव्योच्छेत्तव्ययोर्दंडएवमुख्यः।एतेसामादयोनकेवलंराजव्यवहारविष
याःअपितुसकललोकव्यवहारविषयाः॥यथा·अधीष्वपुत्रकाधीष्वदास्यामिते

वमोदकान्‌· यदान्यस्यैत्र यष्ठामि कर्णमुत्साध्यामिते॥ संधिंच विग्रहंचैव यानमा
सनसंश्रयाः। द्वैधीभावंगुणानेतान्यथावसरि कल्पयेत्॥ संधिर्व्यवस्थाकरणं॥ विग्र
होपकारः यानंपरंप्रतियात्रा। आसनमुपेक्षा· संश्रयो बलवदाश्रयणं· द्वैधीभावः स्वब
लस्य द्विधाकरणं· एतान्संधिप्रभृतीन्गुणान्यथावद्देशकालशक्तिमित्रादिवशेन कल्प
येत्॥ यानकालमाह॥ यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत्। परश्चहीनआत्माच हृ
ष्टवाहनपूरुषः॥ यदा परराष्ट्रं सस्यैर्व्रीह्यादिभिर्गुणैश्च समजलेंधनतृणादिभिरु
पेतं संपन्नं शत्रुश्च हीनो बलादिभिः आत्मा च हृष्टवाहनपूरुषः वाहनानि हस्त्यश्वादी
नि तानि च पुरुषाश्च वाहनपुरुषाः हृष्टा वाहनपुरुषा यस्य स तथोक्तः तदा परराष्ट्र राम
मात्मसात्कर्तुं व्रजेत्। प्राणिनामभ्युदयविनिपातानां दैवायत्तत्वाद्यदि दैवमस्ति तदा
स्वयमेव परराष्ट्रादि वशीभविष्यति अथ नास्ति तदा तत्पिपौरुषेण न भविष्यतीत्यतो व्य
र्थ एवायं यात्राप्रयास इत्यत आह॥ दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता। तत्र दैव
मभिव्यक्तं पौरुषं पौर्वदैहिकं॥ कर्मसिद्धिः फलप्राप्तिः इष्टानिष्टालक्षणा· सा न केव
लं दैवे व्यवस्थिता· अपि तु पुरुषकारेपि लोके तथा दर्शनात्न्त्विक सकादिशास्त्र

वैयर्थ्याच्च॥ अपिच पुरुषकाराभावे दैवमेव नास्तीत्याह। स्याह। तत्रे दैवमिति। यतः
पूर्वदेहार्जितं पौरुषमेव दैवमुच्यते। अतः पुरुषकारं तत्तरं महाफलोदयाभिव्यक्तौ पौरुषं
पूर्वदैहिकं कर्म। तस्मात्पुरुषकाराभावेन दैवमस्तीति पुरुषकारे यत्नो विधातव्यः। इ
दानीं मतान्तरमेवाह। केचिद्दैवात्स्वभावाद्वा कालात्पुरुषकारतः। केचिदिष्टानिष्टफल
क्षणं फलं दैवादिच्छन्ति। केचित्स्वभावात्स्वयमेव भवन्ति न कारणमपेक्षन्त इति। केचित्का
लात् केचित्पुरुषकारत एवेति। स्वमतमाह॥ संयोगे केचिदिच्छन्ति फलं कुशलबुद्धयः॥
दैवादीनां संयोगे समुच्चये फलं भवतीति कुशलबुद्धयो मान्वादयो मन्यन्ते। एकैकस्मा
स्मात् फलं न भवतीत्यत्र दृष्टान्तमाह॥ यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत्॥ एवं पुरुषका
रेण विना दैवं न सिध्यति। नात्र तिरोहितमस्ति। लाभाय रक्षाङ्गं तव्यं। लाभश्च त्रिविधः
हिरण्यलाभो भूमिलाभो मित्रलाभश्चेति तेषु मित्रलाभो सापान्। ततस्तस्मात्सुपायेय
त्नो विधातव्यः। तत्र सुपायश्च सस्य वचनमिसाह॥ हिरण्यभूमिलाभेभ्यो मित्रलब्धि
र्वरा यतः। अतो यतेत तत्र लक्ष्येरक्षेत् ससंसमाहितः। यस्माद्धिरण्यभूमिमित्रलब्धिर्वरा
उत्कृष्टा तस्मात्तत्रालाभे यत्नेन यत्नं कुर्यात् सामादिभिः सस्यं च रक्षेत् समाहितः सावधानः।

८० सत्यमूलत्वान्मित्रलाभस्य॥ इदानीं राज्यगान्याह॥ स्वाम्यमात्यजनो दुर्गं कोशो दंडस्तथै
व च मित्राण्येताः प्रकृतयो राज्यं सप्तांगमुच्यते॥ महोत्साहः स्थूललक्ष इत्यादिलक्षणो महीप
तिः स्वामी। अमात्या मंत्रिपुरोहितादयः। जनो ब्राह्मणादिप्रजाः। दुर्गं धन्वदुर्गादि।
कोशः सुवर्णादिद्रव्यराशिः। दंडो हस्त्यश्वरथपदातिलक्षणं चतुरंगबलं। मित्राणि
सहजकृत्रिमप्राकृतानि। एताः स्वाम्याद्या राज्यस्य प्रकृतयो मूलकारणानि। एवं
राज्यं सप्तांगमुच्यते॥ तदवाप्य नृपो दंडं दुर्वृत्तेषु निपातयेत्। धर्मो हि दंडरूपेण ब्र
ह्मणा निर्मितः पुरा॥ तदेवंविधं राज्यं प्राप्य दुर्वृत्तेषु स्तेनकंटकधूर्तपरदारपरद्र राम
व्यापहारिहिंसादिषु नृपो दंडं पातयेत् प्रयोजयेत्। हि यस्माद्धर्म एव दंडरूपेण पू
र्वं निर्मितो ब्रह्मणा स च दंड इति यौगिकी संज्ञा। दंडो दमनादित्याहुस्तेनादांतान्दम
येदित्यादिगौतमवचनात्॥ स नेतुं न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना॥ स पूर्वो
क्तो दंडो लुब्धेन नृपेणाप्रकृतबुद्धिनाज्ञानतो न्यायानुसारेण नेतुं प्रणेतुं शक्यो
न भवति। कीदृशेन तर्हि शक्य इत्याह॥ सत्यसंधेन शुचिना ससहायेन धीमता॥
सत्यसंधेनाप्रतारकेण शुचिना जितारिषड्वर्गेण ससहायेन पूर्वोक्तसहायसहि ८०

तेनधीमतानयापनयनकुशलेनसदंडोन्यायतोधर्मानुसारेणनेतुंशक्यः ।। यथाशास्त्र
प्रयुक्तः सन्सदेवासुरमानवं । जगदानंदयेत्सर्वमन्यथातुप्रकोपयेत् ।। सदंडः शास्त्रा
क्रमार्गेण प्रयुज्यमानः सदेवासुरमानवैः सहितमिदं सर्वंजगदानंदयेत् हर्षये
त् । अन्यथाशास्त्रातिक्रमणेनप्रयुक्तश्चेऽजगत्प्रकोपयेत् ।। नकेवलमधर्मदंडेन
जगत्प्रकोपोऽपितु प्रयोक्तुर्दृष्टादृष्टहानिरपीत्याह ।। अधर्मदंडनंस्वर्गकीर्तिलोकांश्च
नाशयेत् । सम्यक्कृतुदंडनंराज्ञः स्वर्गकीर्तिजयावहं ।। यः पुनः शास्त्रातिक्रमेणलोभा
दिनादंडस्तः सपापहेतुत्वात्स्वर्गकीर्तिलोकांश्चविनाशयतीति । शास्त्रानुक्रमे
णतुस्तः स्वर्गकीर्तिजयानांहेतुर्भवति ।। अपिभ्रातासुतोर्घ्यो वा श्वशुरोमातुलो
पिवा ।। नादंड्योनामराज्ञोस्ति धर्माद्विचलितः स्वकात् ।। अर्घ्योऽर्घार्हः प्राचा
र्यादिः शेषंप्रसिद्धं । एतेभ्रातृसुतप्रभृतयोपि स्वधर्माच्चलितादंड्याः विमुक्ता
न्यपरः स्वधर्माच्चलितोऽदंड्योनामराज्ञः कोपिनास्ति । एतच्चमातापित्रादिव्यति
रेकेण । तथाचस्मृत्यंतरं । अदंड्यौमातापितरौ स्नातकपुरोहितपुरोहितपरि
व्राजकवानप्रस्थाः श्रुतशीलशौचाचारवंतस्तेहिधर्माधिकारिणः इति ।। यो

८१ दंड्यान्दंडयेद्राजा सम्यक्वध्यांश्च घातयेत्· इष्टं स्यात्क्रतुभिस्तेन समाप्तवरदक्षिणैः
॥यस्तु राजा दंड्यान्स्वधर्मचलितान्दिनादंडयोग्यान्सम्यक्शास्त्रदृष्टमार्गेण धिक्दंड
दानादिना दंडयति· वध्यांश्च वधार्हान्घातयति तेन राज्ञा भूरिदक्षिणैः क्रतुभिः इष्टंभ
वति बहुदक्षिणक्रतुफलं प्राप्नोतीत्यर्थः॥ नन्वफलश्रवणाद्दंडप्रणयनं काम्यमिति
मंतव्यं अकरणे प्रायश्चित्तस्मरणात्। यथाह वसिष्ठः। दंड्योत्सर्गे राजैकरात्रमुपव
सेत्त्रिरात्रं पुरोहितः कृच्छ्रमदंड्यदंडने पुरोहितस्त्रिरात्रं राजेति· दुष्टं सम्यक् दंडप्रयो
क्तव्यमित्युक्तं दुष्टपरिज्ञानं च व्यवहारदर्शनमंतरेण न भवतीति तत्परिज्ञानाय व्य
वहारदर्शनमहरहः स्वयं कर्तव्यमित्याह॥ इति संचिंत्य नृपतिः क्रतुतुल्यफलं पृ राम
थक्। व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहं॥ इत्येवमुक्तेन प्रकारेण क्रतु
तुल्यफलं दंड्यदंडनेन स्वर्गादि तादृशं च अदंड्यदंडनेन सम्यक् विचिंत्य पृथक् वर्णा
दिक्रमेण वक्ष्यमाणलक्षणैः परिवृतः प्रतिदिनं व्यवहारान् वक्ष्यमाणमार्गेण दुष्टा
दुष्टपरिज्ञानार्थं राजा पश्येत्॥ कुलानि जातीः श्रेणीश्च गणान् जानपदान
पि॥ स्वधर्माच्चलितो राजा विनीय स्थापयेत्पथि॥ कुलानि ब्राह्मणादीनां जातयो

मूर्द्धावसिक्तप्रभृतयः श्रेणयस्तक्षकादीनां गणा हेलावुकादीनां जानपदाः का
रुकादयः एतान्स्वधर्माच्चलितान्प्रच्युतान् एकापथ्यापराधं दंडयित्वा पथि स्व
धर्मे स्थापयेत्। दंडं दुर्वृत्तेषु निपातयेदित्युक्तं स च दंडो द्विविधः शारीरोऽर्थदंड
श्चेति। यथाह नारदः।। शारीरश्चार्थदंडश्च दंडस्तु द्विविधः स्मृतः। शारीरस्ता
डनादिस्तु मरणांतः प्रकीर्तितः। काकिण्यादिस्त्वर्थदंडः सर्वस्वांतस्तथैव चेति।।
द्विविधोप्यपराधानुसारेणानेकधा भवति।। आह स्म। शारीरो दशधा प्रोक्तो ह्य
र्थदंडः ~~सर्वस्वांतस्तथैव चेति। द्विविधोप्यपराधानुसारेणानेकधा~~स्त्वनेकधे
ति। तत्र कृष्णलमाषसुवर्णपलादिन्यावेदर्थदंडो वक्तव्यः ते च प्रतिदेशं भिन्नपरि
माणार्थाः स्यैकरूपापराधेपि देशभेदेन न्यूनाधिकदंडो मा भूदिति कृष्णलादिश
ब्दानां नियतपरिमाणविषयत्वं दंडव्यवहारे दर्शयितुमाह।। जालसूर्यमरीचिस्थं
त्रसरेणू रजः स्मृतं। तेष्टौ लिक्षास्तु तास्तिस्रो राजसर्षप उच्यते। गौरस्तु ते त्र
यः षट् ते यवो मध्यस्तु ते त्रयः। कृष्णलः पंच ते माषस्ते सुवर्णस्तु षोडश।। पलं सुव
र्णाश्चत्वारः पंच वापि प्रकीर्तितं।। जालकांतरप्रविष्टादित्यरश्मिस्थितं यद्रजो

८२ त्सानुत्रसरेणुरितुक्तं योगीश्वरादिभिस्तत्त्वदर्शिभिः ः तेत्रसरेणवोष्टौ लिक्षाः स्वेदजं यूकांडं।
तालिक्षास्तिस्रो राजसर्षपो राजिका। ते राजसर्षपास्त्रयो गौरसर्षपः सिद्धार्थः। गौरसर्ष
पाः षड्यवो मध्यमो मध्यमो न स्थूलो न सूक्ष्मः। एतेन गौरसर्षपाणामपि मध्यमाः इति लिंग
म्यते। तथा राजसर्षपाणामपि। तुशब्दादेवैषपादिशब्दा न केवलमुन्मानवचनाः किंतु द्र
व्यवचना इति गम्यते। यथा प्रस्थपरिमिता यवाः प्रस्था उच्यंते। एवं सर्षपा
द्युन्मितं द्रव्यं सर्षपादिशब्दैः। सर्षपादिशब्दानां च केवलोन्मानवचनत्वे त्रसरेणूनां
मुपसंहृत्यानुमशाक्यत्वात्तत्र सरेणुकृष्णलादिव्यवहारो न स्यात्। तत्र स्थूलस्थू
लतरस्थूलतमसूक्ष्मतरसूक्ष्मतममध्यसर्षपाद्युन्मानभेदप्रतिदेशाद्व्यवहार
भेदस्थितेर्दंडव्यवहारे मध्यमस्तेति नियम्यते। ते मध्यमा यवास्त्रय एकः कृष्णलः। राम
ते कृष्णलाः पंच एको माषः। ते माषाः षोडश एकः सुवर्णः। सुवर्णाश्चत्वारः पलमि
ति संज्ञा कथितेति। पंच वापि पलं कीर्तितं नारदादिभिः। सुवर्णे कृष्णलाः ८० प
ले कृष्णलाश्च ३२० सं प्रमाणेन॥ तत्र स्थूलैस्त्रिभिर्यवैः कृष्णलकपरिकल्पनायां व्या गुंजे
वहारिकनिष्कस्य षोडशांशः कृष्णलो भवति। तैः पंचभिर्माषो माषैः षोडशभिः सुवर्णः
। स च व्यावहारिकैः पंचभिर्निष्कैरेकः सुवर्णो भवति। ते चत्वारः पलमिति। निष्का

णां विंशतिः पलं। यद्यप्यसूक्ष्मैर्यवैस्त्रिभिः कृष्णलः परिकल्प्यते तदा व्यवहारकस्य
द्वात्रिंशत्तमो भागः कृष्णलो भवति। तस्मिन्पक्षे सुवर्णः सार्धनिष्कद्वयं भवति। पलं च
दशनिष्कं। यदा तु मध्यमयवैः कृष्णलकल्पना तदा निष्कस्य विंशतितमो भागः कृष्णलः
सुवर्णश्चतुर्निष्कः षोडशनिष्कं पलं। पंचसुवर्णाः पलमिति पक्षे विंशतिनिष्कं पलं। एव
मन्यदपि निष्कस्य चत्वारिंशो भागः कृष्णलो द्विनिष्कः सुवर्णोऽष्टनिष्कं पलमित्यादि लो
कव्यवहारानुसारेणाप्यस्मादेव सूत्रादूहनीयं॥ एवं सुवर्णस्योन्मानं प्रतिपाद्येदानीं
रजतस्याह। द्वे कृष्णले पूर्वोक्ते रूप्यमाषो रूप्यसंबंधी माषः ते रूप्यमाषाः षोडश ध
रणं पुराणश्च रूप्यस्यैव संज्ञान्तरं। ते षोडश स्याद्धरणं पुराणश्चैव राजत इति मनुस्म
रणात्। दशभिर्धरणैः शतमानं पलमिति चाभिधीयते। पूर्वोक्ताश्चत्वारः सुवर्णा ए
को राजतो निष्को भवति॥ इदानीं ताम्रस्योन्मानमाह॥ कार्षिकस्ताम्रिकः पणः। पलस्य
चतुर्थांशः कर्ष इति लोकप्रसिद्धः कर्षेण संमितः कार्षिकः। ताम्रस्य विकारस्ताम्रिकः।
कर्षसंमितस्ताम्रविकारः पणसंज्ञो भवति कार्षापणसंज्ञश्च। कार्षापणस्तु विज्ञेयस्ता
म्रिकः कार्षिकः पण इति मनुवचनात्। पंचसुवर्णपलपक्षे विंशतिमाषः पणो भवति।
आसीत्स्वपक्षे सुवर्ण नवासतिमाषो [illegible] चाशि विंशतितमो भागः पणस्य परिकीर्ति

८३ तद्वृत्तेस्यादिव्यवहारः सिद्धो भवति। चतुःसुवर्णपलपक्षे तु षोडशमाषः पणो भवति।
अस्मिंश्च पक्षे सुवर्णकार्षापणपणशब्दानां समानार्थत्वेपि पणकार्षापणशब्दौ ता
म्रविषयावेव। एवं तावद्धेमरूप्यताम्राणां मानमुक्तं। दंडव्यवहारोपयोगित्वात्।
कांस्यरीतिकादीनामपि लोकव्यवहारांगभूतानामेवं मानं द्रष्टव्यं॥ स्वशास्त्रपरिभा
षामाह। साशीतिः पणसाहस्रो दंड उत्तमसाहसः। तदर्धं मध्यमः प्रोक्तस्तदर्धमध
मः स्मृतः॥ पणानां सहस्रं पणसहस्रं तत्परिमाणमस्येति पणसाहस्रः। अशीत्या सह
वर्त्तत इति साशीतिः। अशीत्यधिकपणसहस्रपरिमितो यो दंडः स उत्तमसाहससंज्ञो
वेदितव्यः। तदर्धं मध्यमः। तस्य साशीतिपणसाहस्रस्यार्धं चत्वारिंशदधिकपणपं
चशतं। तस्यार्धं सप्तत्यधिकपणशतद्वयपरिमितो दंडोऽधमसाहससंज्ञः स्मृतः। उ स्मत
क्तो मन्वादिभिः॥ यत्तु पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः। मध्यमः पंचवि
ज्ञेयः सहस्रं त्वेव चोत्तमः इति मनुवचनं तत्पक्षान्तरमभिमति पूर्वापराधविषयं द्र
ष्टव्यं॥ दंडभेदानाह॥ धिग्दंडस्त्वथ वाग्दंडो धनदंडो वधस्तथा॥ योज्या व्यस्ताः समस्ता
वाप्यपराधवशादिमे॥ धिग्दंडो धिग्धिगिति कुत्सनं। वाग्दंडस्तु परुषशापवचनात्म
कः। धनदंडो धनापहारकः। वधदंडः शारीरावरोधादिर्जीवितांतः। एते चतुर्विधा

दंडाव्यस्ताएकैकशः समस्ता द्वित्रास्त्रिचतुरो वा अपराधानुसारेण प्रयोक्तव्याः॥
उक्तक्रमेण पूर्वासाध्ये उत्तरउत्तरः प्रयोक्तव्यः॥ यथाह मनुः॥ धिग्दंडं प्रथमं कुर्याद्वा
ग्दंडं तदनंतरं॥ तृतीयं धनदंडं तु वधदंडमतः परं॥ दंडव्यवस्थानिमित्तान्याह॥ ज्ञा
त्वापराधं देशं च कालं बलमथापि वा। वयः कर्म च वित्तं च दंडं दंड्येषु पातयेत्॥ यथा
पराधं ज्ञात्वा तदनुसारेण दंडप्रणयनमेवं देशकालवयःकर्मवित्तानि ज्ञात्वा तद
नुसारेण दंड्येषु दंडार्हेषु दंडप्रणयनं कुर्यात्। तथा बुद्धिपूर्वाबुद्धिपूर्वं सकृदाव
त्त्यनुसारेण च। यद्यपि राजानमधिकृत्य अयं राजधर्मकलाप उक्तः तथापि वर्णां
तरस्यापि विषयमंडलादिपरिपालनाधिकृतस्यायं धर्मो वेदितव्यः॥ राज
धर्मान्प्रवक्ष्यामि यथावृत्तो भवेन्नृप इति प्रघ्यउन्नपग्रहणं तु करग्रहणस्य रक्षित्वा
च्चरक्षणस्य दंडप्रणयनाय तत्वादिति॥ ॥इति श्रीपद्मनाभभट्टोपाध्यायात्मजस्य
श्रीमत्परमहंसपरिव्राजकविज्ञानेश्वरभट्टारकस्य कृतौ ऋजुमिताक्षरायां या
ज्ञवल्क्यधर्मशास्त्रविवृतौ प्रथमोध्यायः समाप्तः॥ ॥अस्मिन्नध्याये उपोद्घा
तप्रकरणं ब्रह्मचारिप्रकरणं स्नातकप्रकरणं· विवाहप्र· जातिविवेक· गृहस्थध

